


आ षष्टेः वर्षेभ्यः विज्ञानविनोदयोः प्रकाशयित्री प्रसारयित्री च विशिष्टा पत्रिका



# चन्दमामा

सम्पुटः - २२ सप्टम्बर् - २००६ सञ्चिका - ०९



## एतस्य अङ्कस्य विशेषाः

## अन्तरङ्गम्
















**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkaluthangal, **CHENNAI - 600 097**

E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १५०/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -

**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ -*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# निसर्गविषये दुराचारः

भयोत्पादनस्य अपरः बलिपशुः निसर्गः इति भवन्तः कल्पनां कर्तुं शक्नुवन्ति किम् ? एवं तर्हि, के ते भयोत्पादकाः, ये निसर्गस्य उपरि आक्रमणं कुर्युः ? वस्तुतः वयं मानवाः एव ते भयोत्पादकाः । गतेषु शते दिनेषु जगतः विविधेषु भागेषु किं किं जातमिति आकलयाम । इण्डोनेषियादेशे द्विवारम् भूकम्पाघातः, ततः पुनः तत्रैव सुनाम्याघातः, उत्तरभारते चीनादेशे च प्रवाहः, समग्रे उत्तरभारते अतिवृष्टिः, इण्डोनेषियादेशे लावारसोद्भवः इत्यादयः किमर्थं प्रवृत्ताः ? क्यालिफोर्नियाप्रभृतितिषु स्थलेषु किमर्थं झटिति तापस्य वर्धनं दृश्यते ? निसर्गः किमर्थं स्वस्य कोपं प्रकटयेत् जीविनाम् उपरि ?

एषु दिनेषु जनाः निसर्गवैपरीत्यस्य दुष्परिणामानां विषये चिन्तनम् आरब्धवन्तः सन्ति । वयं जानीमः यत् ओझोन्पटलः दैत्याकारकेभ्यः अल्ट्रावैलेट्किरणेभ्यः अस्मान् रक्षति इति । यदा भूमेः उपरि विद्यमानः ओझोन्-अंशः न्यूनः भवति, तदा अल्ट्रावैलेट्किरणाः महता प्रमाणेन भूमिं प्राप्नुवन्ति, निसर्गे अस्माकम् आरोग्यविषये च हानिं जनयन्ति अपि । ओझोनपटलस्य निर्गाढता वैश्विकोष्णं वर्धयित्वा भौगोलिकस्थितीः व्यत्यस्यति ।

निसर्गस्य महती हानिः जायमाना अस्ति इदानीं, या च इतः पूर्वं कदापि न आसीत् । अतः एव संयुक्तराष्ट्रसङ्घेन सप्टम्बर्मासस्य १६ दिनाङ्कः ओझोन्पटलसंरक्षणदिनत्वेन उद्घोषितः अस्ति । ओझोन्पटलम् अवलम्ब्य एव तिष्ठति अस्माकं सर्वेषां जीवनस्य सुखम् इत्येतत् न विस्मर्तव्यम् अस्माभिः । निसर्गविषये ये दुराचाराः क्रियमाणाः सन्ति ते झटिति स्थगनीयाः, परिसरसमतोलनं रक्षणीयं च ।

*सम्पादकः* - विश्वम्





# वाचकानां पुटोऽयम्

## यु.एस्.ए.तः सुधीरजोशी लिखति -

चन्दमामा १९६२ तमात् वर्षात् अस्माकं गृहस्य सदस्या अस्ति । आ गतेभ्यः त्रिंशतः वर्षेभ्यः अहं चन्दमामायाः वाचकः सङ्ग्राहकः च अस्मि । प्राचीनाः सञ्चिकाः अद्यापि पौनःपुन्येन अहं पठामि । भयङ्करखातस्य पुनरारम्भात् अस्मद्गृहसदस्याः सर्वे नितरां सन्तुष्टाः । कृपया कथा न सङ्क्षिप्यताम् । चित्रम् अपि यथापूर्वम् एव प्रकाश्यतां, न तु ह्रस्वीक्रियताम् । धारावाहिनीषु पुटात्मकं चित्रं भवति स्म पूर्वम् । किं तादृशस्य चित्रस्य दर्शनसौभाग्यं वाचकाः न प्राप्नुयुः ? 'शिलारथः' 'शिथिलालयः' चेति उभे धारावाहिन्यौ पुनः प्रकाशनीये इति अभ्यर्थये । 'अमरवाण्याः' अपि पुनः आरम्भः भवतु ।

## उज्जयिनीतः परमानन्दजैनः लिखति -

गतेभ्यः आ पञ्चाशतः वर्षेभ्यः ये चन्दमामां पठन्तः सन्ति तेषु अहम् अपि अन्यतमः । मध्ये द्वित्राणि वर्षाणि चन्दमामाप्रकाशनं स्थगितं यत् तस्य कारणम् अन्यपत्रिकासु पठनात् ज्ञातं मया । 'दृढव्रती त्रिविक्रमः' इति शिरोनाम्नः पठनात् जातानि अश्रूणि रोद्धुम् अहं न शक्तः एव । पुनः प्रकाशनं यदा आरब्धं ततः नियततया पठामि अहम् । इदानीम् अहं ६२ वर्षीयः । चन्दमामां पठन्तं मां बहवः पृच्छन्ति 'किम् एतस्मिन् अपि वयसि एतस्याः पठनम् ?' इति । तान् अहं वदामि - 'इह तु आजन्म पठिष्यामि एव । अग्रिमे जन्मनि अपि पठनीयम् इति मम इच्छा । तादृशः अवसरः दीयताम् इति अहं भगवन्तं प्रार्थये' इति । चन्दमामा-पठनात् ज्ञानं प्राप्यते इत्येतत् मम वचनं श्रुत्वा ते मौनेन प्रतिनिवर्तन्ते । एतस्यां पत्रिकायां तादृशाः अपि केचन विशेषाः भवन्ति, येषां च पठनात् ज्ञानं तु वर्धते, विवेकोऽपि । अहम् एकः एव न, मत्कुटुम्बस्य आसन्नचत्वारिंशाः मम पुत्रादयः अपि एतां पठन्ति, अत्रत्याः कथाः स्वपुत्रादीन् श्रावयन्ति अपि । सर्वे बालकाः एतां पठेयुः आनन्दं मनोरञ्जनं ज्ञानं च प्राप्नुयुः इति मम अपेक्षा ।

*चन्दमामा*, आकाशे प्रकाशमानः चन्द्रः इव आह्लादकरी भवतु, शाश्वतिकी मनोहरी चापि भवतु इति आशासे ।



# युवराजस्य अक्षराभ्यासः

सूर्यसेनः विन्ध्यगिरिनामकस्य राज्यस्य राजा । धार्मिकः सः सर्वदा प्रजाहिते निरतः । अतः धनस्य अधिकं भागं जनानां हिताय व्ययीकरोति स्म सः । एतस्मात् कारणात् देशस्य कोशः रिक्तः अभवत् । कोशपूरणाय जनेभ्यः करं स्वीकर्तुं राजा न इच्छति स्म । अतः कोशपूरणे कः उपायः आश्रयणीयः इति सः चिन्तां प्राप्नोत् ।

विन्ध्यगिरिराज्यस्य पार्श्वे विदर्भराज्यं वैशालीराज्यं च अस्ति । तयोः राज्ययोः राजानौ चन्द्रकान्तः महीधरश्च विन्ध्यगिरेः आर्थिकदौर्बल्यं ज्ञातवन्तौ । तौ उभौ अपि स्वराज्यसीमानं विस्तारयितुम् इच्छतः स्म । तयोः आकाङ्क्षा आसीत् यत् प्रथमं विन्ध्यगिरिम् आक्रम्य तत् राज्यं स्वाधीनीकृत्य ततः अन्यस्य राज्यम् अपि वशीकरणीयम् इति । एतदर्थं तौ योजनाम् अपि कुर्वन्तौ आस्ताम् ।

सूर्यसेनेन एषः विषयः गुप्तचरद्वारा ज्ञातः । सूर्यसेनः कुशलः राजनीतिज्ञः । अतः प्राप्तं युद्धं दूरीकर्तुं सः उपायं चिन्तितवान् । तदा उत्तमः कश्चन अवसरः तेन प्राप्तः ।

सूर्यसेनस्य पुत्रः जयन्तः चतुर्वर्षीयः । पुत्रस्य अक्षराभ्यासमहोत्सवः राजपुरोहितेन शुभे मुहूर्ते निश्चितः । एतं प्रसङ्गं सफलं कर्तुम् इष्टवान् सूर्यसेनः । अतः सः शत्रुराजौ चन्द्रकान्तमहीधरौ एतं कार्यक्रमं प्रति निमन्त्रयितुम् ऐच्छत् । द्वाभ्यां सह मैत्रीं सम्पादयितुं तेन निमन्त्रणं प्रेषितम् अपि ।

उभौ अपि एतादृशं समयमेव निरीक्षमाणौ आस्ताम् । येनकेनापि व्याजेन सूर्यसेनेन सह कलहम् उत्पाद्य युद्धघोषणा करणीया इति तयोः चिन्तनम् आसीत् । अतः उभौ अपि युवराजस्य जयन्तस्य अक्षराभ्याससमारम्भार्थम् आगतौ ।

आगतौ अतिथी सादरं सत्कृतवान् सूर्यसेनः । आगमनदिनं स्नेहपूर्णवातावरणेन पूर्णम् आसीत् ।

आतिथ्यानन्तरं विदर्भराजः चन्द्रकान्तः



स्वर्णमयं फलकमेकं ददत् सूर्यसेनम् उक्तवान् - ''अक्षराभ्यासं कर्तुं युवराजः अस्य उपयोगं करोतु'' इति ।

वैशालीराजः महीधरः अपि हस्तिदन्तैः निर्मितमेकं फलकं ददत् - ''सरस्वतीमन्दिरे पूजां प्राप्य आगतं फलकम् इदम् । युवराजः अनेन अक्षराभ्यासं करोति चेत् विद्यावान् भवेत्'' इति उक्तवान् ।

इदानीं समस्या उत्पन्ना । तथापि सूर्यसेनः मृदु हसन् - ''भवतोः उभयोः कृते अपि अहं कृतज्ञतां समर्पयामि'' इति उक्तवान् ।

चन्द्रकान्तः महीधरश्च वासस्थानं गतौ । चन्द्रकान्तस्य मनसि विचारः प्रवृत्तः - 'सूर्यसेनः स्वपुत्रस्य अक्षराभ्यासं महीधरेण दत्ते फलके एव कारयतु । तदा तमेव विषयं स्वीकृत्य मम अपमानः सञ्जातः इति व्याजं कथयन् अहं युद्धघोषणां करिष्यामि' इति ।

महीधरस्य चिन्तनमपि अस्यामेव दिशि प्रवृत्तम् । उभयोः अपि उद्देशः समानः एव - सूर्यसेनेन सह कलहस्य उत्पादनाय अवसरः प्राप्येत इति ।

फलकदानप्रसङ्गेन सूर्यसेनः द्वयोः अपि राज्ञोः उद्देशं झटिति ज्ञातवान् । किन्तु अस्याः परिस्थितेः सम्मुखीकरणं कथमिति सः न ज्ञातवान् ।

अक्षराभ्यासस्य शुभदिनम् आगतम् । राज्यस्य परम्परानुगुणं जनतायाः आशीर्वादं प्राप्तुं राजकुमारः पित्रा सह अलङ्कृतस्य गजस्य उपरि उपविश्य प्रस्थितः । राजमार्गे पार्श्वद्वये अपि जनाः स्थिताः आसन् । ते पुष्पाणि वर्षन्तः युवराजम् आशिषा अनुगृहीतवन्तः ।

तस्मिन् समये राज्ञः दृष्टिः अकस्मात् कस्मिंश्चित् बाले पतिता । पञ्चवर्षीयः सः हस्तेन एकं फलकं गृह्णन् राजकुमारमेव पश्यन् रोदिति स्म । तं सान्त्वयितुं तस्य माता बहुधा प्रयतमाना आसीत् ।

सूर्यसेनः हस्तिपकं सूचितवान् यत् हस्तिनं स्थगयतु इति । हस्तिपकः तथैव अकरोत् । राजा हस्तितः अवतीर्य रुदतः बालकस्य समीपं गतः । राजानं पश्यन्ती बालकस्य माता भीता सती - ''क्षम्यतां महाराज ! अस्मिन् शुभे अवसरे रोदनम् अनुचितम् । किन्तु अहं विवशा अस्मि'' इति वदन्ती क्षमां याचितवती ।

''भीतिः मास्तु । एषः बालः किमर्थं रोदिति ?'' इति पृष्टवान् महाराजः ।

''एषः मां पृष्टवान् - मातः ! राजा युव-

राजश्च किमर्थं गजारूढौ आगतौ ? इति । मया उक्तम् - अद्य युवराजस्य अक्षराभ्यास-महोत्सवः । अतः प्रजाभ्यः आशीर्वादं स्वीकर्तुं तौ आगतौ इति । तत् श्रुत्वा एषः - अहम् एतत् फलकं युवराजाय ददाम्येव इति वदन् फलकं स्वीकृत्य अत्र आगतः अस्ति'' इति ।

एतत् वचनं श्रुत्वा सूर्यसेनः अतीव हृष्टः अभवत् । मनसि एव सः अचिन्तयत् - 'मुग्धः एषः बालः प्रीत्या युवराजाय लेखनफलकं दातुम् इच्छति । एषः महतः आनन्दस्य विषयः । प्रीतिपूर्वकं दानात् ऋते अन्यत् किमपि श्रेष्ठतां न भजति' इति ।

ततः सः तं बालकं प्रेम्णा आहूय पृष्टवान् - ''भवतः नाम किम् ?'' इति ।

बालकः अश्रूणि मार्जयन् - ''सुदामा इति'' इति उक्तवान् ।

''सुदामन् । भवान् रोदनं स्थगयतु । हसन्मुखः सन् भवान् तत् लेखनफलकं युव-राजाय ददातु'' इति सूर्यसेनेन उक्तम् ।

सुदामा महता सन्तोषेण स्वेन आनीतं लेखनफलकं युवराजाय दत्तवान् । राजा सुदाम्नः मातरम् उक्तवान् - ''राजभवने रात्रौ समारम्भः भविष्यति । तदर्थम् अवश्यं पुत्रेण सह भवत्या आगन्तव्यम्'' इति ।

'एतयोः आनयनं भवता करणीयम्' इति कञ्चन अधिकारिणम् उक्तवान् सः ।

शोभायात्रा समाप्ता । राजभवने युव-राजस्य अक्षराभ्यासकार्यक्रमः आरब्धः । राजपुरोहितः युवराजेन अक्षरं लेखयितुं लेखन-फलकं पृष्टवान् । चन्द्रकान्तमहीधरयोः महत्



कुतूहलम् - केन उपायनीकृतस्य लेखन-फलकस्य उपयोगः इदानीं भवेत् इति ।

तदा सूर्यसेनः उत्थाय आगतान् राज्ञः पश्यन् उक्तवान् - ''युवराजस्य अक्षराभ्यास-महोत्सवे भागं ग्रहीतुं विशेषातिथिरूपेण राजा चन्द्रकान्तः, राजा महीधरश्च आगतौ स्तः । मम पुत्रस्य विद्याभिवृद्धिम् इच्छतोः एतयोः एकेन स्वर्णमयफलकम्, अपरेण सरस्वती-मन्दिरे पूजितं हस्तिदन्तनिर्मितं फलकं च दत्तम् । तयोः अहं धन्यवादं समर्पयामि । राज्यपरम्परानुसारं यदा अहं पुत्रश्च जनतायाः आशीर्वादं प्राप्तुं गतौ तदा सुदामनामकः कश्चित् निर्धनबालकः स्वसमीपे स्थितं लेखनफलकं राजपुत्राय दातुम् इष्टवान् । अहं स्वयं तत् लेखनफलकं स्वीकृतवान् । इदानीम् अत्र त्रीणि लेखनफलकानि सन्ति । प्रजानाम् इच्छा एव

अस्माकम् इच्छा । अतः भवन्तः एव वदन्तु - मया कस्य वा लेखनफलकस्य उपयोगः करणीयः एतदवसरे इति'' इति ।

यावत् प्रतिवेशिराजौ किमपि वक्तुम् उद्युक्तौ तावता तत्र सम्मिलितेषु सभासत्सु कश्चन उक्तवान् - ''अस्माकं राजा धर्मप्रभुः । धनिकनिर्धनयोः विषये समाना प्रवृत्तिः तस्य । मुग्धः सुदामा यत् लेखनफलकं दत्तवान् तत्र एव अद्य युवराजस्य अक्षराभ्यासः भवतु इति अस्माकम् इच्छा'' इति । तदा सभा हर्षध्वनिना एतत् कथनम् अन्वमोदयत् ।

राजा सूर्यसेनः इदानीम् आतङ्करहितः अभवत् । 'यदि एकेन राज्ञा दत्तं फलकम् उपयुक्तं स्यात् तर्हि अपरः राजा मह्यं प्रकुप्य युद्धाय सन्नद्धः जातः स्यात् । सुदाम्ना दत्तं फलकम् उपयुज्येत चेत् उभौ अपि राजानौ कुपितौ स्याताम् । किन्तु इदानीं तु प्रजाभिः एव मम मार्गदर्शनं कृतम् अस्ति' इति विचिन्त्य तमेव मार्गम् अनुसृत्य राजा यशः प्राप्तवान् ।

युवराजस्य अक्षराभ्यासः सुदाम्ना दत्ते फलके एव अभवत् ।

चन्द्रकान्तमहीधरौ ज्ञातवन्तौ यत् सूर्यसेनः प्रजासु नीचस्तरे स्थितं जनमपि कथम् इच्छति, प्रजाः अपि महाराजं कियता गौरवेण पश्यन्ति इति । एतादृशम् अनन्यसदृशं प्रेम, आदरं च दृष्ट्वा तौ आश्चर्यान्वितौ अभवताम् । 'राज्ञः आर्थिकबलं, सैनिकबलं च प्रजानां प्रीतेः सम्मुखे तृणप्रायम्' इति तौ ज्ञातवन्तौ । 'सूर्यसेनः स्वप्रजाः पुत्रान् इव पालयति । अतः एव प्रजानामपि राज्ञि तावान् एव आदरः, प्रीतिश्च । एतादृशस्य सूर्यसेनस्य विषये शत्रुत्वं धर्मविरुद्धं नीतिरहितं च' इति चिन्तनम् उत्पन्नं तयोः मनसि । अतः उभौ अपि तस्य मैत्रीम् इष्ट्वा सुहृदौ अभूताम् ।

ततः सूर्यसेनोऽपि विदर्भराजं, वैशालीराजं च योग्यरीत्या सम्मान्य अमूल्यानि उपायनानि दत्त्वा ससन्तोषं तौ प्रेषितवान् ।

सूर्यसेनः पूर्वं चिन्तितवान् आसीत् - समस्या गभीरा अस्ति, अतः तस्याः परिणामः अपि घोरः एव स्यात् इति । किन्तु बालकस्य सुदाम्नः कारणात् समस्या विना क्लेशं परिहृता अभवत् । अतः राजा सुदाम्नः विद्याभ्यासस्य निमित्तं योग्यां व्यवस्थां कारितवान् ।





# कामेशस्य सङ्गीतसभा

रामेशः कामेशश्च प्रतिवेशिनौ । रामेशः व्यवहारे निपुणः । तस्य वाक्शैली अपि मधुरा । वाक्चातुर्यमपि अपूर्वम् । ग्रामीणानाम् अभिप्रायोऽपि एवमेव । किन्तु कामेशस्य स्वभावः नितराम् एतद्विरुद्धः । सः सर्वदा रामेशम् अपमानयितुम् इच्छति स्म । रामेशात् अहमेव श्रेष्ठतरः इति प्रतिपादयितुं व्यर्थं प्रयतते स्म च ।

एकदा रामेशकामेशौ पार्श्वग्रामस्य भूस्वामिनः पुत्रस्य विवाहार्थं गतौ । सायं विवाहकार्यक्रमः समाप्तः । रात्रौ भोजनानन्तरं सङ्गीतसभा आयोजिता आसीत् तत्र ।

रात्रौ अष्टवादनम् अभवत् । परन्तु येन गायकत्वेन उपस्थातव्यम् आसीत् सः सङ्गीतविद्वान् न उपस्थितः एव ।

अतः वध्वाः पिता विषादेन अवदत् - ''मार्दङ्गिकाः सर्वेऽपि सिद्धाः सन्ति । किन्तु गायकः एव न आगतः'' इति ।

तदा कश्चित् तम् उक्तवान् - ''भवान् चिन्तां मा करोतु । यतः अत्र रामेशकामेशौ स्तः । एतौ उभौ अपि उत्तमगायकौ एव । तौ गायतः चेत् समस्या परिहृता भवेत्'' इति ।

अतिथीनाम् अनुरोधेन कामेशः गानम् आरब्धवान् । गानसमये कामेशस्य मनसि अभासत यत् मम ध्वनिः मधुरः अस्ति इति । केचन कामेशस्य प्रशंसां कृतवन्तः अपि । किन्तु रामेशः किमपि न उक्तवान् । अतः तस्य व्यवहारेण कामेशः कुपितः ।

ग्रामं प्रत्यागतः कामेशः स्वस्य सङ्गीतस्य प्रशंसां स्वयम् अकरोत् । त्रयः वाद्यवादकाः अपि तस्य प्रशंसाम् अकुर्वन् । एवं प्रशंसा कृता चेत् गानसमये सहयोगित्वेन कामेशः अस्मान् स्वीकुर्यात् इति तेषां चिन्तनम् आसीत् ।

तेषां सहयोगेन तस्यामेव रात्रौ कामेशेन एका सङ्गीतसभा आयोजिता । किन्तु गानं श्रुतवतां जनानां मनसि अभिप्रायः उत्पन्नः यत्

कामेशः सङ्गीतविषये किमपि न जानाति, उच्चैः आक्रोशनमेव सः सङ्गीतं मन्यते इति । अतः ते सर्वे मनसि एव अहसन् ।

सङ्गीतसभा समाप्ता । कामेशः अवदत् - ''मया गानेन त्यागराजः अपि अतिशयितः इव । मम सङ्गीतसभायाः विषये भवन्तः स्वस्य अभिप्रायं यदि कथयेयुः तर्हि अहम् उपकृतः भवेयम्'' इति ।

केचन दाक्षिण्यवशात् कामेशं प्रशंसितवन्तः । प्रशंसकेषु वाद्यवादकाः अपि अन्यतमाः आसन् ।

किन्तु रामेशः तु मौनेन एव स्थितवान् आसीत् । तदीयम् एतत् मौनम् असहमानः कामेशः तम् अपृच्छत् - ''मम सङ्गीतसभायाः विषये भवतः अभिप्रायः कः ?'' इति ।

कामेशस्य चिन्तनम् आसीत् यत् यदि रामेशः मां न प्रशंसेत् तर्हि सर्वे तम् असूयाग्रस्तं सम्भाव्य निन्देयुः इति ।

किन्तु रामेशेन उक्तम् - ''अहम् एकः एव प्रशंसां न कृतवान् इति न । मादृशाः अनेके सन्ति । तेषां सर्वेषाम् अभिप्रायः एव ममापि'' इति ।

रामेशस्य वचसि यः द्वन्द्वार्थः आसीत् तम् अर्थं तत्रत्याः सर्वे अवगतवन्तः । अतः ते उच्चैः अहसन् । एतत् दृष्ट्वा क्रुद्धः कामेशः - 'रामेशेन स्वाभिप्रायः कथनीयः एव' इति सानुरोधं पुनः उक्तवान् । तदा रामेशः वाद्यं ये वादितवन्तः तेषां प्रशंसनं कृत्वा तूष्णीम् अभवत् ।

''मम गानविषये किमपि न उक्तं भवता'' इति पुनः उक्तवान् कामेशः ।

''एते वाद्यवादकाः भवतः गानस्य प्रशंसां कृतवन्तः । किन्तु तेषु कोऽपि स्वप्रशंसां तु न कृतवान् । अस्य अर्थः यत् आत्मप्रशंसायां भवतः प्रतिभा असाधारणी इति । तेषु तादृशी प्रतिभा नास्ति । यत् कार्यं तैः न कृतं तत् कार्यं मया कृतम् । यत् कार्यं स्वयं कर्तुं ये असमर्थाः तेषां साहाय्यकरणं मम स्वभावः । भवादृशस्य समर्थस्य साहाय्यं कर्तुं नाहम् इच्छामि । अत एव अहं भवतः प्रशंसां न कृतवान्'' इति उक्तवान् रामेशः ।

एतत् श्रुत्वा कामेशः लज्जितः अभवत् । एतदवसरे अपि तेन पराजयः एव प्राप्तः आसीत् ।





# भयङ्करः खातः

## ११

*[ब्रह्मदण्डिमान्त्रिकस्य ग्रहणानन्तरं नगरवासिनः जयमल्लस्य केशवस्य च अन्वेषणम् आरब्धवन्तः समग्रे पर्वते । केशवस्य पित्रा वृद्धेन सूचितं यत् केशवजयमल्लौ भिक्षुकवेषं धृत्वा नगरे एव भ्रमन्तौ स्तः इति । एतत् ज्ञात्वा राजगुरुणा सैनिकाः सूचिताः यत् नगरे विद्यमानान् सर्वान् भिक्षुकान् गृह्णन्तु इति । तदनन्तरम् ..... ]*

राजगुरुणा प्रेषिताः सैनिकाः, अन्ये केचन उत्साहिनः युवानः च दृष्टिपथम् आगतान् सर्वान् भिक्षुकान् गृहीत्वा राजभवनदिशि प्रस्थिताः । गृहीतेषु न केवलं भिक्षुकाः छिन्नवस्त्रधारिणः, अपि तु निर्धनाः अपि आसन् । अतः एव तेषां संख्या सहस्राधिका जाता आसीत् ।

राजभवनस्य अङ्गणे सम्मिलितं भिक्षुकगणं दृष्टवतः राज्ञः आश्चर्यस्य मितिः एव न आसीत् । एतावन्तः जनाः मम राज्ये भोजनम् अलभमानाः सन्ति इति तेन कदापि कल्पना अपि न कृता आसीत् ।

राजा, राजगुरुः, ब्रह्मदण्डी मान्त्रिकः च यदा अङ्गणम् आगतवन्तः तदा सैनिकाः भिक्षुकान् पङ्क्तिशः स्थापितवन्तः । राज्ञः, राजगुरोः च कृते उन्नतस्य असनस्य व्यवस्था कृता । बद्धः ब्रह्मदण्डी तेषां निकटे स्थितवान् ।

''गुरुवर्य ! अस्मद्राज्यं सुभिक्षम् अस्ति



इत्येव अधुना यावत् मम मतम् आसीत् । अद्य अत्र सम्मिलितान् एतान् पश्यामि चेत् भासते शासनरीतौ कुत्रचित् दोषाः सन्ति इति । एतादृश्यः विषमस्थितयः उद्भूताः सन्ति इति महामन्त्री अपि कदापि न असूचयत्'' इति अवदत् राजा खिन्नतां प्रकटीकुर्वन् ।

तदा राजगुरुः हसन् – ''महाराज ! अत्र महामन्त्रिणः दोषः न कोऽपि । धनागारस्य व्ययेन एतेषां पालनपोषणम् असाध्यम् । राजकोशतः कति वर्षाणि एते पालयितुं शक्यन्ते ? एवं करणेन भिक्षुकाणां सङ्ख्या द्वैगुण्यम् आप्नुयात् । अतः एते स्वावलम्बिनः कर्तव्याः । तदर्थं कश्चन उपायः चिन्तनीयः । कामपि प्राणहानिं विना धनं प्राप्तुं कश्चन मार्गः सम्प्रति दृश्यते मया'' इति कथयन् सः राज्ञः कर्णे – ''मान्त्रिकस्य अस्य ब्रह्मदण्डिनः द्वारा भयङ्करखाते विद्यमानः धनराशिः कथं प्राप्तव्यः इति चिन्त्यताम्'' इति अवदत् ।

एतस्य श्रवणात् राज्ञः मुखे कान्तिः समुद्भूता । सः ब्रह्मदण्डिदिशि पश्यन् – ''ब्रह्मदण्डिन् ! भवता राक्षसप्रवृत्तिः त्यक्ता चेत् मया क्षमादानं चिन्त्येत'' इति अवदत् ।

एतत् श्रुत्वा मान्त्रिकः राजानं साष्टाङ्गं प्रणम्य उक्तवान् – ''प्रभो ! अहं सदा भवतः एव सेवकः अस्मि । दुष्टानां प्रेरणया मम ईदृशी गतिः । किन्तु मम राजभक्तौ भवतः शङ्का कदापि मा भूत् इति प्रार्थना । सुवर्णेन, रजतेन च राजकोशः पूरणीयः इति उद्देशेन एव कालभैरवस्य उपासनां कृत्वा भयङ्कर-खातस्य मार्गस्य ....''

ब्रह्मदण्डिनः वाक्यसमाप्तितः पूर्वमेव राजगुरुः अवदत् – ''ब्रह्मदण्डिन् ! तं विषयं सर्वेषां पुरतः न कथयतु'' इति ।

मान्त्रिकः सर्वथा मौनम् आश्रितवान् । तावता सेनापतिः तत्र आगत्य अग्रे गन्तुम् आदिष्टवान् भिक्षुकान् । ते सर्वे भिक्षुकाः पङ्क्तिशः अग्रे गन्तुम् उद्युक्ताः ।

प्रत्येकं भिक्षुकस्य मुखं सावधानम् अव-लोकयन् – 'नायम्' 'एषः अपि न' 'यद्यपि अस्य मुखं जयमल्लस्य मुखसदृशम् एव । किन्तु एषः अक्ष्णा काणः अस्ति' 'तस्य नेत्रे तु सिंहनेत्रे इव' इत्येवम् अवदत् सः मान्त्रिकः ।

एवं भिक्षुकाणां परीक्षा घण्टां यावत् प्रवृत्ता । अन्ततो गत्वा एतत् स्पष्टम् अभवत् – एतेषु जयमल्लः केशवः वा नास्ति इति ।

तदा राजगुरुणा पृष्टं – ''केन प्रसारितः एषः अपवादः ?'' इति ।

''ये प्रथमपर्यायेण अरण्यं प्रति गतवन्तः आसन् तान् तत्र कश्चन वृद्धः उक्तवान् इति श्रूयते'' इति अवदत् सेनापतिः ।

''सः.... सः वृद्धः । सः केशवस्य पिता । मया न चिन्तितं यत् सः एवंविधां वञ्चनां करिष्यति इति । केशवेन जयमल्लेन वा एषा नाटिका कल्पिता स्यात् । ते राज्य-सीमाम् अतिक्रम्य गताः स्युः एतावता कालेन'' इति उक्तवान् ब्रह्मदण्डी ।

राजगुरोः मनसि अपि अभासत – 'अस्य कथने सत्यांशः वर्तते । प्रायः अधुना ते भयङ्करखातस्य मार्गे भवेयुः । एतावता ते तत्र प्राप्तवन्तः स्युः अपि' इति ।

ततः राजा, मान्त्रिकः, राजगुरुश्च राजभवनं प्रत्यागताः । सेनापतिः नगरं प्रति भिक्षुकाणां गमनम् अनुमतवान् । राजा राजगुरुश्च सम्मिल्य विचारविमर्शे मग्नौ अभवताम् ।

''महाराज ! एषः उत्तमः अवसरः हस्तात् च्युतः न भवेत् । भयङ्करखातस्य सुवर्ण-रजतादिकम् अस्माकं वशम् आगच्छेत् । एतत् भवतः प्रजानां च हिताय एव भविष्यति । तत् गुप्तधनप्राप्तेः सामर्थ्यं केशवे एव अस्ति इति मान्त्रिकः पूर्वम् एव उक्तवान् । तस्य ग्रहणाय एव एतावन्ति दिनानि सः कृतसङ्कल्पः सन् पर्वते आसीत् । श्रूयते यत् केशवस्य स्कन्धे प्रसारितफणस्य सर्पस्य चिह्नम् अस्ति इति । तेन चिह्नेन एव मान्त्रिकेण ज्ञातं यत् एतस्य लक्ष्यस्य साधनाय केशवः एव योग्यः इति'' इति राजगुरुः महाराजम् अवदत् ।

''किन्तु सः अस्मान् एव वञ्चयित्वा पलायितः इति भाति'' इति अवदत् राजा ।




''वञ्चकाय वञ्चनया एव उत्तरं दातव्यम् अस्माभिः । मम मनसि कश्चन उपायः स्फुरन् अस्ति । यदि भवता अनुमन्येत तर्हि अहं वदामि'' इति अवदत् राजगुरुः ।

राज्ञा एतत् अनुमन्यमानेन अङ्गीकारपूर्वकं मन्दं शिरः चालितम् ।

''वयं घोषणां कारयाम यत् सप्ताहाभ्यन्तरे केशवः स्वयम् अत्र प्रत्यागमिष्यति चेत् राज्यस्य अर्धभागः प्रदास्यते, सूचिते एतस्मिन् अवधौ तेन न आगंस्यते चेत् अनन्तरकाले तं गृहीत्वा आनीतवन्तं, उत तं मारयित्वा तदीयं शिरः आनीतवन्तं वा सामन्तराजं करिष्यामः इति । मन्ये सः अर्धराज्यप्राप्त्याशया आगच्छेत् इति । आगतः सः कथं भयङ्करखातं प्रति नेतव्यः इति अहं मान्त्रिकः च निर्णयं करिष्यावः'' इति अवदत् राजगुरुः ।




'अर्धराज्यदानं केवलं केशवं लोभिनं कर्तुम् एव' इति ज्ञातवान् राजा एतं प्रस्तावम् अङ्गयकरोत् ।

सत्वरम् एव ग्रामेषु, पत्तनेषु, नगरीषु, समग्रे ब्रह्मपुरराज्ये च घोषणा कारिता ।

दिनद्वयाभ्यन्तरे एषा घोषणा जयमल्लस्य, केशवस्य, तत्पितुः वृद्धस्य च कर्णपथम् अपि प्रविष्टा । नगरवासिनां पर्वतात् निर्गमनस्य अनन्तरं ते त्रयः अपि पर्वतगुहां प्रविष्टवन्तः आसन् । किं करणीयम् इति चिन्तनम् आरब्धं तैः त्रिभिः अपि ।

''एषा घोषणा पयोमुखविषकुम्भायते इति भासते मम'' इति अवदत् वृद्धः ।

''अत्र कः संशयः ? यावत् केशवस्य साहाय्यं न प्राप्स्यते तावत् खाते स्थितः निधिः कथं लभ्येत तैः ? तदर्थं केशवः एव कुशलः समर्थः च इति ब्रह्मदण्डिनः राजगुरोः च चिन्तनम् अस्ति'' इति उक्तवान् जयमल्लः ।

''प्रायः ते पाणिपादं बद्ध्वा मां खातं नेष्यन्ति । यदा तेषाम् आवश्यकता पूर्णा भविष्यति तदा मम उद्बन्धनम् आदेक्ष्यते तैः'' इति उक्तं कुपितेन केशवेन ।

''सर्वथा निवारयितुम् अशक्यः अस्ति एषः अपायः इति भासते मह्यम् । भवतः शिरसः मूल्यम् अर्धं राज्यम् अस्ति । अतः यावच्छीघ्रम् एतस्मात् राज्यात् बहिर्गच्छेम चेत् एव हितं भवेत् अस्माकम्'' इति अवदत् जयमल्लः ।

''अनेन परिधानेन स्थितान् अस्मान् ये केऽपि अभिज्ञातुम् अर्हन्ति एव । एषा घोषणा एतावता कालेन समग्रराज्यजनैः विदिता स्यात् एव । किं ते अस्माकं प्राणपक्षिणं न अपहरेयुः ?'' इति पृष्टं केशवेन ।

केशवस्य पितुः चिन्ता तु असीमा आसीत् । सः गुहातः बहिः आगत्य सर्वत्र दृष्टिं सकृत् प्रासारयत् ।

ततः सः अवदत् - ''धनस्य लोभेन अस्माकं ग्रहणाय कतिपयजनाः पुनः अत्र आगच्छेयुः । ते पर्वतेषु खातेषु च आवृत्य अन्वेषणं करिष्यन्ति । भवन्तौ क्षिप्रमेव इतः निर्गच्छताम्'' इति ।

''अनेन वेषेण तिष्ठेम चेत् अस्माकम् इष्टं न सिद्ध्यति इति तु सत्यम् एव । अतः क्षत्रियपरिधानं धृत्वा वयं वदाम यत् वयं भ्रमणार्थं प्रस्थिताः इति । एवं विन्ध्यं क्रान्त्वा अग्रे गच्छाम । एतदर्थं यावत् धनम् अपेक्षितं तावत् तु ब्रह्मदण्डिना गुहायां गोपितम् अस्ति

एव । तत् मया ज्ञातम् अस्ति'' इति अवदत् जयमल्लः ।

''अहोरात्रं तस्याः गुहायाः संरक्षणाय सैनिकौ नियुक्तौ स्तः राज्ञा । अतः तत्र प्रवेशः इदानीं दुश्शकः'' इति अवदत् केशवः ।

''एवं तर्हि तौ हत्वा गुहां प्रवेष्टुं प्रयत्नं करवाव'' इति असूचयत् जयमल्लः ।

''यावच्छक्यं तयोः हननं विना एव गुहाप्रवेशः साधनीयः । सर्वं निश्शब्दं साधनीयं चेत् रात्रिपर्यन्तं प्रतीक्षा एव वरम्'' इति अकथयत् वृद्धः ।

एषः प्रस्तावः वादः केशवेन, जयमल्लेन च अङ्गीकृतः । सूर्यास्तानन्तरं यावत् अन्धकारः न प्रसृतः तावत् ते त्रयः अपि पर्यायक्रमेण स्वस्थानसंरक्षणं कृतवन्तः । यतः तेषां भयम् आसीत् यत् यदाकदाचिदपि नगरवासिनः आक्रमणं कुर्युः इति । रात्रौ सन्निहितायां ते त्रयः अपि मान्त्रिकस्य गुहादिशि प्रस्थिताः । मार्जारगत्या शिलानां पृष्ठभागेषु चलन्तः ते गुहानिकटं गताः । सैनिकौ एतेषाम् उपस्थितिं न ज्ञातवन्तौ एव । वृद्धः सैनिकस्य समीपे विद्यमानायाः शिलायाः पृष्ठतः स्थित्वा सैनिकस्य पृष्ठे खड्गं निधाय उच्चैः अगर्जत् - ''आक्रोशनं मा क्रियताम् । कथ्यतां च द्वितीयः क्व वर्तते इति'' इति ।

पृष्ठतः जातेन खड्गस्पर्शेन एव निस्संज्ञः इव अभवत् सः सैनिकः । 'इदानीं किं कर्तव्यम्' इति यावत् सः चिन्तयन् आसीत् तावता केशवः जयमल्लः च तत्र उपस्थितौ अनूह्यगत्या ।




''लुण्ठाकानाम् अस्माकं नायकेन अद्य आदिष्टम् अस्ति यत् भवन्तौ मारयित्वा निधिः आनेतव्यः इति । किन्तु वयं भवतोः हननं न इच्छामः । वयं स्वकार्यं साधयित्वा इतः निर्गच्छामः । अपरः कुत्र अस्ति वद रे'' इति उक्तं तयोः एकतरेण ।

दिग्भ्रान्तः सैनिकः निद्रां कुर्वाणं मित्रं दर्शितवान् । तूर्णमेव केशवः जयमल्लः च तस्य उपरि निपत्य तदीयं हस्तपादादिकं बद्ध्वा तम् एकत्र प्रक्षिप्तवन्तौ ।

''मम पृष्ठतः खड्गः व्रणं कुर्वन् प्रविशन् अस्ति । भवतां लुण्ठाकमित्रं कथ्यतां - खड्गः निष्कास्यताम् इति'' इति दैन्यस्वरेण अवदत् प्रथमसैनिकः ।

वृद्धः तु कञ्चित् समयं तत्रैव तिष्ठेत् इति निश्चयः कृतः आसीत् जयमल्लकेशवाभ्याम् ।

''भवन्तौ यदि अस्माकं नायकं पश्येतां तर्हि भवतोः प्राणाः वायौ विलीनाः भवेयुः । भयङ्करं रूपं तस्य'' इति वदन्तौ तौ एतस्य अपि सैनिकस्य बन्धनं कृत्वा तस्य नेत्रे अपि बद्धवन्तौ ।

जयमल्लः गुहाभ्यन्तरं गत्वा स्वल्प-समयाभ्यन्तरे एव धूमावृतवस्त्रः सन् बहिः आगच्छत् । गुहातः बहिः आगतस्य तस्य हस्ते कश्चित् स्यूतः आसीत्, यस्य इतस्ततः चालनेन 'घणघण'ध्वनिः निस्सरति स्म ।

''एतस्मिन् बहूनि स्वर्णनाणकानि सन्ति । मान्त्रिकेण ब्रह्मदण्डिना बहूनां जनानां वञ्चनेन सङ्गृहीतानि एतानि । अतः एव एतस्य स्वीकारः न हि पापाय । अनेन एव धनेन वयं सैनिकवेषं, अस्त्राणि च क्रेतुं शक्नुयाम'' इति अवदत् जयमल्लः ।

अनन्तरं त्रयः अपि ततः स्वगुहाम् आगत-वन्तः । 'श्वः प्रभाते एतेन धनेन अपेक्षितानि वस्तूनि क्रेतव्यानि । तदर्थं भवता नगरं प्रति गन्तव्यम्'' इति केशवजयमल्लाभ्यां वृद्धः उक्तः ।

''श्वः मम वेषः तथा परिवर्तितो भविष्यति यथा कोऽपि माम् अभिज्ञातुं न शक्नुयात्'' इति उक्तवान् वृद्धः ।

ब्रह्मदण्डिनः गुहायां जयमल्लः यदा शिला-पृष्ठभागतः सुवर्णं निष्कासयन् आसीत् तदा राजभवने शयानेन मान्त्रिकेण दुस्स्वप्नाः दृश्यमानाः आसन् । 'कश्चित् गुहां प्रविश्य सुवर्णनाणकानि चोरयन् अस्ति' इति स्वप्नः कश्चन दृष्टः ।

''अहो, चोरः, चोरः !! मम सुवर्णं, सुवर्णम् !!'' इति उच्चैः आक्रोशनं कुर्वन् मञ्चात् अवतीर्य द्वारदिशि वेगेन अधावत् ब्रह्मदण्डी ।

तत्र रक्षणार्थं नियुक्तः रक्षकः धावतः मान्त्रिकस्य उरसि शूलं लक्ष्यीकृत्य स्थापयन् अवदत् - ''भोः, पदम् एकम् अपि यदि अग्रे निक्षिप्येत तर्हि भवतः उरः भिद्येत'' इति ।

सः सहवर्तिनः सैनिकान् आहूय उक्तवान् - ''भोः, भवन्तः अगच्छन्तु अत्र । एषः मान्त्रिकः पलायितुम् उद्युक्तः अस्ति । एतं बध्नीयाम'' इति ।

- *(अनुवर्तते)*



वेताल-
कथा

# विवेचना-शक्तिः

अन्धकारमय्यां घोरायां रात्रौ त्रिविक्रमः वृक्षात् शवम् अवतार्य स्कन्धे संस्थाप्य यथापूर्वं श्मशानदिशि प्रस्थितवान् । भयङ्करे वातावरणे अपि ईषदपि भीतः न आसीत् सः । यतः निरन्तरप्रयासे एव विश्वासः तस्य । तदा शवान्तर्गतः वेतालः तम् अवदत् - ''अये राजन् ! मेघाः गर्जन्तः सन्ति । सौदामिन्यः अपि सर्वासु दिक्षु द्योतमानाः सन्ति । परितः भूत-प्रेतादयः अट्टहासं कुर्वन्तः सन्ति । तथापि निर्भयः भवान् क्रियमाणं कार्यम् अत्यजन् इव भासते । लक्ष्य-हीनः भवान् अनुचिते कार्ये मग्नः इति भाति मम । भवन्तम् आ बहोः कालतः अहं कथयन् एव अस्मि । तथापि मम वचने

"भवन्तौ यदि अस्माकं नायकं पश्येतां तर्हि भवतोः प्राणाः वायौ विलीनाः भवेयुः । भयङ्करं रूपं तस्य" इति वदन्तौ तौ एतस्य अपि सैनिकस्य बन्धनं कृत्वा तस्य नेत्रे अपि बद्धवन्तौ ।

जयमल्लः गुहाभ्यन्तरं गत्वा स्वल्प-समयाभ्यन्तरे एव धूमावृतवस्त्रः सन् बहिः आगच्छत् । गुहातः बहिः आगतस्य तस्य हस्ते कश्चित् स्यूतः आसीत्, यस्य इतस्ततः चालनेन 'घणघण'ध्वनिः निस्सरति स्म ।

"एतस्मिन् बहूनि स्वर्णनाणकानि सन्ति । मान्त्रिकेण ब्रह्मदण्डिना बहूनां जनानां वञ्चनेन सङ्गृहीतानि एतानि । अतः एव एतस्य स्वीकारः न हि पापाय । अनेन एव धनेन वयं सैनिकवेषं, अस्त्राणि च क्रेतुं शक्नुयाम" इति अवदत् जयमल्लः ।

अनन्तरं त्रयः अपि ततः स्वगुहाम् आगतवन्तः । 'श्वः प्रभाते एतेन धनेन अपेक्षितानि वस्तूनि क्रेतव्यानि । तदर्थं भवता नगरं प्रति गन्तव्यम्" इति केशवजयमल्लाभ्यां वृद्धः उक्तः ।

"श्वः मम वेषः तथा परिवर्तितो भविष्यति यथा कोऽपि माम् अभिज्ञातुं न शक्नुयात्" इति उक्तवान् वृद्धः ।

ब्रह्मदण्डिनः गुहायां जयमल्लः यदा शिला-पृष्ठभागतः सुवर्णं निष्कासयन् आसीत् तदा राजभवने शयानेन मान्त्रिकेण दुस्स्वप्नाः दृश्यमानाः आसन् । 'कश्चित् गुहां प्रविश्य सुवर्णनाणकानि चोरयन् अस्ति' इति स्वप्नः कश्चन दृष्टः ।

"अहो, चोरः, चोरः !! मम सुवर्णं, सुवर्णम् !!" इति उच्चैः आक्रोशनं कुर्वन् मञ्चात् अवतीर्य द्वारदिशि वेगेन अधावत् ब्रह्मदण्डी ।

तत्र रक्षणार्थं नियुक्तः रक्षकः धावतः मान्त्रिकस्य उरसि शूलं लक्ष्यीकृत्य स्थापयन् अवदत् - "भोः, पदम् एकम् अपि यदि अग्रे निक्षिप्येत तर्हि भवतः उरः भिद्येत" इति ।

सः सहवर्तिनः सैनिकान् आहूय उक्तवान् - "भोः, भवन्तः अगच्छन्तु अत्र । एषः मान्त्रिकः पलायितुम् उद्युक्तः अस्ति । एतं बध्नीयाम" इति ।

- *(अनुवर्तते)*



वेताल-
कथा

# विवेचना-शक्तिः

अन्धकारमय्यां घोरायां रात्रौ त्रिविक्रमः वृक्षात् शवम् अवतार्य स्कन्धे संस्थाप्य यथापूर्वं श्मशानदिशि प्रस्थितवान् । भयङ्करे वातावरणे अपि ईषदपि भीतः न आसीत् सः । यतः निरन्तरप्रयासे एव विश्वासः तस्य । तदा शवान्तर्गतः वेतालः तम् अवदत् - "अये राजन् ! मेघाः गर्जन्तः सन्ति । सौदामिन्यः अपि सर्वासु दिक्षु द्योतमानाः सन्ति । परितः भूत-प्रेतादयः अट्टहासं कुर्वन्तः सन्ति । तथापि निर्भयः भवान् क्रियमाणं कार्यम् अत्यजन् इव भासते । लक्ष्य-हीनः भवान् अनुचिते कार्ये मग्नः इति भाति मम । भवन्तम् आ बहोः कालतः अहं कथयन् एव अस्मि । तथापि मम वचने



सर्वथा अनादरः भवतः । राज्ञः भवतः बहूनि दायित्वानि भवन्ति । तानि विस्मृत्य मार्गच्युतः जातः अस्ति भवान् । एतत् कार्यं साधितं चेदपि अस्य फलं भवान् एव भोक्ष्यति इत्यत्र कः विश्वासः ? क्रियमाणे कार्ये अवधानं भवतु इति उद्देशेन भवन्तं युवराजस्य जयन्तस्य कथां श्रावयामि, येन फलं प्राप्य अपि चित्त-चाञ्चल्यात् लब्धं सुखं परित्यक्तम् । भवतः विषये एवं न सम्भवेत् इति मम अपेक्षा । कथाश्रवणतः भवतः मार्गायासपरिहारः तु भवेत् एव'' इति ।

ततः वेतालेन कथा आरब्धा -

चन्द्रगिरेः युवराजः जयन्तः । सः गुरुकुले योग्यं विद्याभ्यासम् अकरोत् । प्रवृद्धः सन् विवाहयोग्यः सञ्जातः अपि । या मह्यं रोचेत सा एव युवतिः मया परिणेतव्या इति तस्य महती अपेक्षा आसीत् ।

विवाहार्थं तस्य मातापितरौ बह्वीः कन्याः दर्शितवन्तौ । तथापि तासु कामपि न अङ्गी-कृतवान् जयन्तः ।

कदाचित् सः सायङ्कालीनं विहारं समाप्य प्रत्यागतः । तदा तस्य माता कस्याश्चित् सुन्दर्याः कन्यायाः चित्रं दर्शयन्ती अवदत् - ''एषा अस्ति प्रतापदुर्गस्य राजकुमारी । तद्देशस्य राज्ञः एकमात्रपुत्री एषा सर्वविधतया अपि भवतः अनुरूपा इति बन्धुवर्गस्य अपि अभि-प्रायः । आवयोः अपि इष्टाय अभवत् एषा । अतः भवान् एतस्याः परिणये मतिं कर्तुम् अर्हति'' इति ।

जयन्तः तस्मिन् चित्रे सकृत् दृष्टिक्षेपम् अपि अकृत्वा एव अवदत् - ''एषा न इष्यते मया'' इति । एतावत् उक्त्वा सः ततः वेगेन निर्गत-वान् ।

तद्दिने रात्रौ निद्राम् अलभमानः सः चिन्तितवान् - 'राजभवने एव स्थित्वा सुन्दर्याः कन्यायाः चयनं प्रायः कष्टकरम् एव भवेत् । अतः मया बहिः भ्रमता एतत् कार्यं साधनीयम्' इति ।

ततः सः झटिति वेषपरिवर्तनं कृत्वा अश्वम् आरुह्य रात्रौ एव प्रासादात् निर्गतवान् । सूर्योदयात् पूर्वं सः घनारण्ये कञ्चन पर्वतप्रदेशं प्राप्तवान् । रमणीयः परिसरः आसीत् सः । पर्वतशिखरात् निर्गतायाः निर्झर्याः जलं शिलायाः उपरि पतति स्म । तस्मात् तत्रत्या शोभा द्विगुणिततां गता आसीत् ।

जयन्तः तत्र तिष्ठन् सकृत् सर्वत्र दृष्टिम् अपातयत् । ततः अनतिदूरे एव कञ्चन कुटीरः

दृष्टः तेन । अश्वात् अवतीर्य सः कुटीरदिशि प्रस्थितः ।

तस्मात् कुटीरात् बहिः उभे सुन्दर्यौ कन्ये बहुविधानां वर्णमयानां पुष्पाणां मध्ये भ्रमन्त्यौ पुष्पाणि चिन्वत्यौ च सः दृष्टवान् । ते कन्ये दृष्टवतः जयन्तस्य मनसि अभासत – 'किम् एतस्यां भूमौ एतादृश्यः सुन्दर्यः अपि भवितुम् अर्हन्ति ?' इति ।

सः तयोः निकटं गत्वा अवदत् – ''भवत्यौ निश्चयेन सुन्दर्यौ । किन्तु भवत्यौ अरण्ये किमर्थं वसतः इति किम् अहं ज्ञातुम् अर्हेयम् ?'' इति ।

तस्य दर्शनात् क्षणं यावत् यद्यपि ते भीते, तथापि संयमेन ते उक्तवत्यौ – ''सौन्दर्यस्य अर्थः कः इति केनापि न शक्यते वक्तुम् । सौन्दर्यं पश्यतः दृष्टेः अनुगुणं भवति । महाज्योतिषिकस्य आवयोः पितुः मतम् आसीत् यत् सुन्दरे वातावरणे कुटीरे वासः क्रियते चेत् आवयोः भविष्यत् उज्ज्वलं भविष्यति इति । अतः एतत् स्थानं वासाय चितम् अस्ति तेन । गतदिने आवयोः पिता सामन्त-राजस्य निमन्त्रणं प्राप्य तदीयं राज्यं गतवान् अस्ति'' इति ।

'भवान् कः' इति यावत् ते प्रष्टुम् उद्युक्ते ततः पूर्वमेव जयन्तः अवदत् – ''मम नाम जयन्तः इति । अहम् आत्मना इष्टाम् एव सुन्दरीं प्राप्तुं गुप्तरूपेण आगतः अस्मि । विषयेऽस्मिन् मातापित्रोः हस्तक्षेपः न इष्यते मया । भवत्योः एकतरां परिणेतुम् अहं सिद्धः अस्मि । भवत्पितुः आगमनानन्तरं एतस्मिन् विषये चर्चां करिष्यामि'' इति ।



तस्य कथनं श्रुत्वा ते उभे अपि विस्मिते अभवताम् । अनन्तरं ते परस्परं चर्चां कृत्वा तम् अवदताम् – ''आवां यमले स्वः । अस्मत्पित्रा पूर्वमेव उक्तम् आसीत् यत् आवयोः विवाहः अभिन्नेन पुरुषेण सह भविष्यति इति'' इति ।

''विना सङ्कोचं भवत्यौ उभे अपि पत्नीत्वेन स्वीकर्तुम् अहं सिद्धः अस्मि । मन्ये भवत्योः रूपं समानम् अस्ति चेदपि गुणाः भिद्येरन् इति । एतावता मम परिचयः प्राप्तः स्यात् भवतीभ्याम् । स्वस्य मनसि यत् अस्ति तत् कृपया किञ्चित् वदताम्'' इति उक्त्वा जयन्तः पार्श्वस्थायाः कस्याश्चित् शिलायाः उपरि सुखेन उपाविशत् ।

तस्य प्रश्नेन उभे अपि हसन्त्यौ उक्तवत्यौ – ''यत् मनसि आगतं तत् साधनीयम् एव इति



तु आवयोः स्वभावः । आवाम् उभे अपि आत्मानं श्रेष्ठतरां मन्यावहे । यत् साधनीयं तत् अवश्यं साधयावः एव । एतदर्थं यत्किमपि कर्तुं, सर्वस्वं त्यक्तुं वा आवां सिद्धे स्वः'' इति ।

''एवम् अस्ति स्थितिः ?'' इति स्वगतम् इव उक्त्वा जयन्तः ते पुनः अपृच्छत् - ''स्पष्टं कथ्यतां - मद्विषये भवत्योः अभिप्रायः कः ?'' इति ।

उभे अपि परस्परं सम्भाषणं कृत्वा अवदताम् - ''पितुः कथनम् आसीत् यत् भवत्योः भावी पतिः बुद्धिमान् विवेकी च भवेत् इति । यदि भवान् आवयोः परिणयम् इच्छेत् तर्हि स्वीयां बुद्धिमत्ताम् अवश्यं प्रमाणीकुर्यात् । आवयोः नाम अस्ति मन्दारा चम्पा चेति । आवयोः का मन्दारा, का च चम्पा इति किं भवान् वक्तुं शक्नुयात् ?'' इति ।

''यमले भवत्यौ रूपेण अपि समाने । वर्णेन एका पाटलयुक्ता, अपरा च हरिता । वर्णाधारेण अभिज्ञानं सुकरं भवतु इति उद्देशेन मन्दारा चम्पा चेति भवत्योः नाम कृतं स्यात् इति मम चिन्तनम् । एतत् मम चिन्तनम् अवितथं स्यात् इति भावयामि अहम्'' इति उक्तं जयन्तेन ।

''आवयोः वयसि अपि क्षणानां भेदः अस्ति । किं भवान् अभिज्ञातुं शक्नुयात् यत् का ज्येष्ठा, कतरा च कनिष्ठा इति ?'' इति अपृच्छताम् ते ।

क्षणं यावत् विचिन्त्य जयन्तेन उक्तम् - ''कश्चन समयावकाशः दीयताम् । अहम् अवश्यं वदिष्यामि'' इति ।

सायङ्काले ताभ्यां कदलीपर्णे व्यञ्जन-पायसादिसहितं भूरिभोजनम् एव भोजितम् ।

भोजनोत्तरं जयन्तः ते उक्तवान् - ''भवत्योः मन्दारा एव ज्येष्ठा, चम्पा च अस्ति कनिष्ठा'' इति ।

''सत्यम् एतत् । भवान् समीचीनं निर्णयं कृतवान् अस्ति । एतत् कथं ज्ञातुं शक्तं भवता ?'' इति महता कुतूहलेन तं पृष्टवती मन्दारा ।

''प्रायः वयसा ज्येष्ठा या भवति सा एव पाककार्यं करोति । कनिष्ठा च साहाय्यं करोति । भवती पाकं सज्जीकृतवती, चम्पा परिवेषणं कृतवती । एतद्विषये मया अवधानं दत्तम् । अतः अहं सुलभतया ज्ञातवान्'' इति जयन्तः ताम् अवदत् ।

पुनः परस्परं समालोचनं कृत्वा आगत्य ते तं पृष्टवत्यौ – ''भवान् महाबुद्धिमान् अस्ति । अद्भुतं तार्किकविश्लेषणसामर्थ्यम् अपि अस्ति भवतः इति तु सिद्धम् । आवयोः उभयोः पोषणसामर्थ्यम् अपि किं भवतः अस्ति ?'' इति ।

जयन्तः तयोः प्रश्नं श्रुत्वा उच्चैः हसित्वा आत्मनः राजकुलोत्पन्नत्वादिकम् उक्त्वा पुनः अपृच्छत् – ''इतोऽपि किमपि प्रष्टव्यम् अस्ति चेत् इदानीम् एव प्रष्टुम् अर्हतः भवत्यौ'' इति ।

तदा मन्दारा उक्तवती – ''जन्मकुण्डल्याः अनुसारम् आवयोः विवाहः केनचित् एकेन सह भवेत् । समाने दिने एव आवां पुत्रं प्राप्स्यावः । किन्तु मम पुत्रस्य अपेक्षया चम्पायाः पुत्रः कतिभ्यश्चित् क्षणेभ्यः पूर्वम् एव जनिष्यते । एवं सति भवान् आवयोः कस्याः पुत्रं भवदुत्तदायिनं कुर्यात् ?'' इति ।

एतत् श्रुत्वा जयन्तः अवदत् – ''एतस्य प्रश्नस्य उत्तरदानाय मह्यं कश्चन समयः आवश्यकः'' इति ।

''अस्तु, रात्रौ सम्यक् विचार्य प्रातः उत्तरं वदतु नाम भवान्'' इति द्वाभ्याम् अपि उक्तम् ।

तस्यां रात्रौ जयन्तस्य शयनार्थं प्रकोष्ठः सज्जीकृतः । अनन्तरदिने प्रातः तयोः पिता प्रत्यागतः । चम्पा प्रकोष्ठं गत्वा जयन्तम् अन्विष्टवती । जयन्तः तत्र न आसीत् ।

सा प्रत्यागत्य भगिनीं पितरं च उक्तवती –



''जयन्तः प्रकोष्ठे नास्ति । भावी राजा दिनं यावत् अतिथित्वेन सत्कृतः इत्येषा तृप्तिः एव अवशिष्टा इदानीम्'' इति ।

एतदनन्तरम् अचिरात् एव मातापितृभ्यां चितां कन्यां परिणीतवान् जयन्तः ।

बेतालः एवं कथां समाप्य अवदत् - ''राजन् ! मन्दारया चम्पया च सह जयन्तेन कृतः व्यवहारः शोभावहः आसीत् इति न भासते । सः भाविनीं पत्नीम् अन्विष्यन् सुन्दरीद्वयम् अपश्यत् । ते तस्य इष्टाय अपि जाते । तथापि किमर्थं ते त्यक्त्वा मातापितृभ्यां चिता एव कन्या परिणीता तेन ? तस्य निर्णयः अनुचितः इति किं न भासते ? तेन दृष्टः स्वप्नः अक्षिसात् भवन् आसीत् । चञ्चलता-वशं गतः सः किमपि अन्यद् एव कृतवान् । एषा त्रुटिः तस्य चित्तचाञ्चल्यं किं न द्योतयति ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा चूर्णीभूतं भवेत्'' इति ।

तदा तूष्णीं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''मन्दाराचम्पाभ्यां जयन्तस्य तार्किकं ज्ञानं ज्ञातुम् एव जटिलाः प्रश्नाः पृष्टाः । प्रश्नानां द्वारा ताभ्यां यत् परुष-कथनं कृतं, तद्द्वारा जयन्तेन अवगतं यत् उभाभ्याम् अपि स्वस्य इच्छायाः पूरणे कोऽपि अनुसन्धिः न अङ्गीक्रियते इति । स्त्रियाः अयं स्वभावः सर्वनाशनाय कल्पते । एतत् सत्यं सः जानाति स्म । 'एतादृश्यौ यदि मम पत्न्यौ भवेतां तर्हि स्वपुत्रस्य एव राजत्वम् इच्छेताम् इत्यत्र न संशयः । तदा तु निवारयितुम् अशक्या समस्या उद्भविष्यति । ततः च न भविष्यति अन्तःपुरे शान्तिः, न वा राज्ये सुरक्षा । राज्यसुरक्षायाः, प्रजानां सुखस्य च विषये राज्ञः अवधानम् अधिकं स्यात्, न तु स्वकीयायाः इच्छायाः पूरणे । तदा एव राज्यं सुभिक्षं भविष्यति ।' एतत् सर्वं विचारमन्थनेन अवगत्य अन्ते तेन निर्णीतं यत् गृहजनैः यथा निर्णीतं तथा करणम् एव उचितं न्याययुतं च इति । अत्र तस्य विवेचनशक्तिः दूरदृष्टिः च दृष्टिगोचरतां याति, न तु कापि मानसिकी चञ्चलता'' इति ।

एवं वदता राज्ञा मौनव्रतस्य भङ्गः कृतः आसीत् । अतः एव वेतालः ततः अदृश्यः भूत्वा यथापूर्वं पुनरपि वृक्षशाखायां लम्बमानः जातः ।



# नववर्षीयः चलच्चित्रनिर्देशकः



किशननामकः नववर्षीयः बालकः कन्नड-चलच्चित्रेषु अभिनयं कृतवान् । दूरदर्शनस्य सहस्रभागात्मिकासु महाधारावाहिनीषु अपि पात्रं गृहीतवान् अस्ति सः । कादाचित्कतया चित्रग्राहकस्य पृष्ठतः स्थित्वा कार्यकरणे आसक्तः सः इदानीं चित्रनिर्देशकरूपेण परिवृत्तः अस्ति ।

एतस्य निर्देशनक्षेत्रस्य प्रथमसाहसस्य फलश्रुतिः 'C/o फुटपात्'नामकं कन्नड-चलनचित्रम् । एतत् चित्रम् अचिरात् एव चित्रालयेषु जवनिकायाम् उपस्थातुं सज्जीभवत् अस्ति । चित्रीकरणस्थलेषु बहुभ्यः निर्देशकेभ्यः चित्रीकरणतन्त्राणि, कौशलं च हस्तगतं कृत्वा चित्रकारेभ्यः चित्रीकरणकलाम् अधीयानः अस्ति अयं किशोरः किशनः । कदाचित् तेन मार्गे भ्रमन्तः पत्रिकाः विक्रीणानाः धृतच्छिन्नवस्त्राः बालाः अव-लोकिताः । ते सर्वेऽपि अनाथाः इति पित्रा उक्तम् ।

विद्यालयं गन्तुम् उत्सुकस्य कस्यचित् अनाथ- बालकस्य कथां रचितवान् एषः पित्रा प्रेरितः तां कथां चित्रीकर्तुम् । माता अपि तस्य चित्रस्य निर्मापकत्वम् अङ्गयकरोत् । 'तारा'सदृशान् प्राप्तराष्ट्रिय-पुरस्कारान् अभिनेतॄन् अपि प्राप्तवान् सः । तस्य अत्यल्पं वयः चित्रीकरणे क्लेशाय न जातम् । 'सर्वेऽपि मया सह तथैव व्यवहरन्ति, यथा कस्यचित् प्रसिद्धनिदेशकस्य निकटे व्यवहरेयुः' इति वदति किशनः । जगति अतिकनीयान् निर्देशकः इति 'गिनीस'पुस्तके मम नाम्नः योजनं सम्भाव्यते इति कथयति सः । तस्मिन् ग्रन्थे पूर्वतनः उल्लेखः नेदर्ल्याण्ड्देशस्य सिडनीलिङ्गनामकस्य अस्ति । त्रयोदशवर्षीयेण तेन १९७३ तमे वर्षे चित्रस्य निर्देशनं कृतम् आसीत् । १९९६ तमे वर्षे जनवरीमासे षष्ठे दिनाङ्के जातः एषः किशनः गाने, सङ्गीतसंयोजने च निपुणः । अनेन कृतेन सङ्गीतसंयोजनेन युक्तस्य गीतिकागुच्छस्य १५,००० प्रतिकृतयः एतावता विक्रिताः इत्येतत् एव तदीयां बहुमुखीं प्रतिभां द्योतयति ।

# न ममत्वभावः कस्मिंश्चिदपि !!



१८८७तमे वर्षे हेमन्तर्तौ गङ्गानदीतीरे वाराणस्यां कश्चित् योगी दिवङ्गतः । तस्मिन् नगरे अज्ञातप्रदेशे वासं कुर्वतः तस्य १३० वर्षाणाम् अनन्तरं मृतिः अभवत् । किन्तु सः कदा जातः आसीत् ?

विषयेऽस्मिन् बह्व्यः किंवदन्त्यः श्रूयन्ते एव । किन्तु ताः न हि विश्वासार्हाः । विषयेऽस्मिन् जिज्ञासवः केचन तस्य योगिनः पृष्ठभूमिका ज्ञातव्या इति चिन्तयन्तः बहुधा गवेषणं कृतवन्तः । तैः एवम् उच्यते -

सः इदानीन्तने आन्ध्रप्रदेशे विजयनगर-साम्राज्ये जातः । तदीयः ग्रामः 'होलिय'-नामकः । १६०७ तमे वर्षे विद्यावती-नरसिंहरावयोः पुत्रत्वेन सः जन्म प्राप्नोत् ।

तस्य मातापितरौ शिवभक्तौ । अतः तौ पुत्रस्य नाम कृतवन्तौ - शिवरामः इति । वर्धमानः सः बालकः साधकः जातः ।

राजस्थाने पुष्करे तेन 'गुरुगणपति-सरस्वती' इति नाम प्राप्तम् । सः स्वस्य जीवनस्य अधिकं भागं वाराणस्याम् एव अयापयत् । तत्रत्याः तं 'तैलङ्गस्वामी' इति निर्दिशन्ति स्म । सः मूलतः आन्ध्रप्रदेशीयः आसीत् इत्यतः एतादृशं नाम तस्य । प्राचीने काले बिहार-बङ्गाल-ओरिसा-आन्ध्रप्रदेशाः अङ्ग-वङ्ग-कलिङ्ग-तेलङ्ग-नामभिः निर्दिश्यन्ते स्म ।

तैलङ्गस्वामी असंख्याकानि अद्भुतानि सृष्ट्वा अदर्शयत् इत्येषः न हि पर्वतीकृतः विषयः,

प्रस्तुत वस्तुस्थितिः एव ।

सर्वदा सः दिगम्बरः सन् सर्वत्र भ्रमति स्म । तदा आङ्ग्लशासकानां स्त्रियः अस्य विषये आक्षेपं कृतवत्यः । तस्य बन्धनार्थं ये न्यायाधीशाः आदेशं कृतवन्तः ते एव विस्मिताः अभवन् तस्य योगिनः माहात्म्यं दृष्ट्वा !! अतः ते पुनः आदेशं कृतवन्तः – ''अग्रे ये केऽपि अस्य विभिन्नजीवनस्य विषये उपहासं न कुर्युः'' इति ।

तस्य जीवने बह्व्यः घटनाः तादृश्यः घटिताः, याः विलक्षणाः ज्ञानदाः आश्चर्यजनिकाः च आसन् । तासु एका एव घटना अत्र उल्लिख्यते ।

मातुः अङ्के शिशुः यथा उपविशति तथा एषः गङ्गायां दीर्घकालं नदीतले उपविशति स्म विना श्वासोच्छ्वासम् । विना प्रयत्नं तरङ्गान् सम्मुखीकृत्य नद्यां लीलया तरति स्म सः मीनः इव ।

कदाचित् उज्जयिनीराजः नौकया गङ्गानदीं तरन् आसीत् । स्वामी अकस्मात् मज्जितः भूत्वा राज्ञः नौकानिकटं गत्वा तां नौकाम् आरूढवान् ।

राज्ञा सह विद्यमानाः स्थानीयाः राजानम् अवदन् – 'एषः असाधारणः साधकः योगी' इति । अतः राजा तम् आदरेण प्रणम्य श्रद्धां सूचितवान् । योगी बालवत् व्यवहरन् राज्ञः खड्गं गृहीत्वा जले प्राक्षिपत् । सः मणिभूषितः विशिष्टः खड्गः तु राजवंशस्य श्रेष्ठतां द्योतयति स्म । अतः राजा ब्रिटिश-अधिकारिणः च बहुधा तस्य भर्त्सनं कृतवन्तः । किन्तु तत् किमापि अश्रुतवान् इव तूष्णीं स्थितवान् आसीत् सः स्वामी । कोऽपि प्रतिस्पन्दः न दर्शितः तेन ।



''विचित्रः एषः स्वामी । मम सम्मानप्रतीकभूतं खड्गम् एषः नाशितवान् । किम् अहं करवाणि ?'' इति राजा क्रुद्धः सन् अवदत् ।

नौका तीरप्रदेशं प्राप्तवती । स्वामी सहजतया गभीरतारहिते जले हस्तं प्रसार्य खड्गद्वयं प्राप्तवान् ।

ततः सः उद्विग्नं राजानम् अवदत् - ''राजन् ! भवान् स्वीयं खड्गं स्वीकर्तुम् अर्हति'' इति ।

तयोः स्वीयः कः इति निर्णेतुं सर्वथा अशक्तः जातः राजा । यतः सर्वविधतया अपि समानौ आस्तां तौ खड्गौ ।

सम्भ्रान्तं तं राजानं पुनः स्वामी - ''भवान् स्वीयां सम्पदम् एव अभिज्ञातुं किं न शक्नोति ? अहो, कीदृशः असमर्थः भवान् !!'' इति वदन् एकं खड्गं जले प्रक्षिप्य अपरं राज्ञे दत्तवान् ।

वस्तुतः तु सः एव आसीत् राज्ञः तस्य खड्गः ।

तदा निरुत्तरः राजा ज्ञातवान् यत् कथं मानवाः दृष्टं सर्वं मदीयम् इति भावयन्तः ममकारेण सर्वम् अपि आत्मसात्कर्तुम् इच्छन्ति इति । स्वकीयः दोषः अपि तेन ज्ञातः एव ।

तेन एतत् अपि ज्ञातं यत् वास्तविकयोगिनां स्वीयं किमपि न विद्यते । अतः एव ते एतस्मिन् जगति स्थितं न किमपि स्वीयं मन्यन्ते । वस्त्रखण्डे अपि तेषां ममत्वभावना न भवति इति ।

## चन्दमामाप्रश्नावली षष्ठी (जुलै - २००६)

समुचितम् उत्तरं प्रेषितवतः संस्कृतावृतेः वाचकस्य नाम अधोनिर्दिष्टम् । वाचकानां ज्ञानाय षष्ठ्याः प्रश्नावल्याः उत्तरम् अधः दत्तम् अस्ति । अन्ये अपि वाचकाः एतस्यां स्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।

**अमरेशगुरुः**

द्वारा - जितेन्द्रनाथगुरुः, पद्मपुरम्, राजबोडासम्बरम्

बरगढ, ओडिशा - ७६८ ०३६

## षष्ठ्याः चन्दमामाप्रश्नावल्याः उत्तराणि

१. सः कोरियादेशीयः राजा । 'राज्ञा अवगतः पाठः' इत्येतस्यां कथायाम् ।

२. असमराज्ये दिब्रोर्यानगरे ।

३. १४ वर्षाणि ।

४. गोदावरी ।

५. अक्टोबरमासे १६ दिनाङ्के ।

६. फारसदेशः । (अद्यतनं नाम इरान् इति)

७. बद्रुद्दीन तैयबजी ।

८. 'श्रेष्ठः कः, तुच्छश्च कः' इत्येतस्यां गुजरातीयायां जानपदकथायाम् ।



# अहितुण्डिकः राजा

महेन्द्रपुरीराज्ये सर्पवरः नाम कश्चन ग्रामः आसीत् । तस्मिन् ग्रामे साम्बशिव-नामकः अहितुण्डिकः वासं करोति स्म । सः सर्पग्रहणे, तेषां मुखात् विषस्य वमनकारणे च अत्यन्तं चतुरः आसीत् । सर्पदंशनस्य चिकित्सायाम् अपि नितरां प्रसिद्धः आसीत् सः ।

विवाहस्य बहूनां वर्षाणाम् अनन्तरं तस्य पुत्रप्राप्तिः अभवत् । तेन पुत्रस्य नाम कृतं - नागराजः इति । सः तत्पत्नी च महत्या प्रीत्या तं पोषयतः स्म । साम्बशिवस्य पत्न्याः महान् विश्वासः आसीत् जन्मकुण्डल्याम् । अतः सा कञ्चित् प्रसिद्धं ज्योतिषिकं पुत्रस्य जन्म-कुण्डलीं दर्शितवती ।

ज्योतिषिकः नागराजस्य जन्मकुण्डलीं सावधानतया परिशील्य आश्चर्यान्वितः भूत्वा च तौ दम्पती असूचयत् - ''अहो, महत् वैचित्र्यम् एतत् !! भवतोः पुत्रः एषः राजा भविष्यति । अस्य भाग्ये राजयोगः अस्ति'' इति ।

''किं मम पुत्रः राजा भविष्यति ? कृपया परिहासं परित्यज्य वास्तविकं वदतु भवान्'' इति अवदत् साम्बशिवः ।

''विनोदार्थं न उक्तं मया । अहं सत्यमेव कथयन् अस्मि । यदा एषः राजा भविष्यति तदा अहं न विस्मर्तव्यः भवद्भ्याम्'' इति अवदत् ज्योतिषिकः ।

ज्योतिषिकस्य वचसि विश्वासः उत्पन्नः साम्बशिवस्य । 'मम पुत्रः निरक्षरः राजा भविष्यति चेत् न शोभावहम् । अतः सः विद्यावान् भवेत्' इति विचिन्त्य सः नागराजं पाठशालां प्रति प्रेषितवान् ।

नागराजः दशवर्षीयः अभवत् । पितृवत् सोऽपि सर्पग्रहणे कुशलः जातः । अध्ययनेऽपि अनन्यसमर्थः सः प्रखरां बुद्धिमत्तां प्रदर्शयति स्म । अतः सः सर्वेषां सहपाठिनाम् ईर्ष्यापात्रम्




अभवत् । सर्वे तस्य परिहासं कुर्वन्ति स्म - ''एषः भावी राजा । अहितुण्डिकः राजा'' इति ।

नागराजः यौवनं प्राप्तवान् । तस्य पिता च वार्धक्यम् अवाप्नोत् । तावता नागराजेन सर्पाणां विषये समग्रं ज्ञानं प्राप्तम् आसीत् । सर्मदंशनाय तेन यत् औषधं दीयते स्म तत् महत् परिणामं जनयति स्म । साम्बशिवस्य महती इच्छा आसीत् यत् इहलोकत्यागात् पूर्वं 'पुत्रं सिंहासनारूढं पश्येयम् इति । किन्तु तत् दिनं न आगतम् एव । नागराजः विवाह-वयस्कः अभवत् । तथापि तस्य विवाहं कर्तुं साम्बशिवः न उद्युक्तः । यतः 'पुत्रे राज्ञि जाते महता वैभवेन विवाहं कारयित्वा तत् भव्यं दृश्यं दृष्ट्वा धन्यः भवेयम्' इति तस्य आकाङ्क्षा आसीत् । ज्योतिषिकस्य द्वारा पुनः एतद्विषये विवरणं प्रष्टुम् इष्टवान् सः । किन्तु वर्षात् पूर्वम् एव सः ज्योतिषिकः पञ्चत्वं गतः आसीत् ।

एतन्मध्ये काचित् विचित्रा घटना अभवत् । राज्ञः कश्चन अश्वारोही सर्पवरस्य वीथीषु भ्रमन् आसीत् । तदा सः स्वस्य सम्मुखम् आगतवन्तं नागराजम् भर्त्सितवान् - ''कः भवान् ? बुद्धिहीनः उत अहङ्कारी ? अपसरतु मम पुरस्तात्'' इति ।

एतत् श्रुत्वा केनचित् ग्रामीणेन उक्तम् - ''अस्माकं नागराजं गौरवेण पश्येत् भवान् । यतः सः भाविनि काले भविष्यति अस्माकं राजा'' इति ।

विस्मितः सः अश्वारोही मौनेन ततः निर्गतवान् । सप्ताहानन्तरं केचन सैनिकाः तं ग्रामं प्रविश्य नागराजं गृहीत्वा महाराजस्य विजयवर्धनस्य समीपं नीतवन्तः ।

नागराजः राज्ञा गृहीतः अस्ति इति ग्रामे वार्ता सर्वत्र प्रसृता । केनचित् उक्तम् - 'एषः राजा भविता इति वयं सर्वदा वदामः स्म । तत् श्रुत्वा अपि राजा किं तूष्णीं तिष्ठेत् ? शिरश्छेदनं कर्तुम् एव एषः नीतः स्यात् राज्ञा' इति ।

एतत् ज्ञात्वा साम्बशिवः भयेन कम्पमानः अभवत् । निराशस्य तस्य ज्योतिषिकवचने अविश्वासः जातः ।

सः देवमन्दिरं गत्वा श्रद्धया बद्धाञ्जलिः सन् प्रार्थनाम् अकरोत् - ''हे, देव ! मम पुत्रः राजा न भविष्यति चेत् अपि कापि चिन्ता नास्ति मम । किन्तु यथा तस्य प्राणहानिः न स्यात् तथा कृपां करोतु हे भगवन् !''

इति ।

किन्तु यथा ग्रामीणैः चिन्तितं तथा किमपि न जातम् । प्रत्युत राजा घोषणाम् अकरोत् - ''नागराजस्य विवाहं मम पुत्र्या नागाम्बया सह निर्वर्तयिष्यामि'' इति ।

घोषणा सर्वत्र प्रसृता । केचन स्वाभिप्रायं प्राकटयन् - ''अहितुण्डिकेन सह राजकुमार्याः विवाहः'' इति ।

साम्बशिवस्य सन्तोषस्य कापि मितिः एव न आसीत् । ज्योतिषिकस्य वचनम् एवं वास्तविकं भवेत् इत्यत्र सः विश्वसितुम् एव न शक्तवान् । सर्पवरग्रामस्य जनाः नितरां प्रसन्नाः अभवन् । यतः तेषां सहचरः एव भावी राजा जातः आसीत् ।

एकमासाभ्यन्तरे एव नागराजनागाम्बयोः विवाहः महता वैभवेन संवृत्तः । नागराजस्य मातापितृभ्यां भव्यं स्वागतं सम्माननं च प्राप्तम् ।

कदाचित् रात्रौ यदा नागराजः पत्न्या सह पर्यङ्के शयानः आसीत् तदा तेन सर्पस्य फूत्कारध्वनिः श्रुतः । विस्तारितफणः कश्चन सर्पः राजकुमार्याः दिशि आगच्छन् आसीत् । अनुक्षणं नागराजः शय्यातः अवतीर्य सर्पस्य पुच्छं गृहीत्वा भूमौ घट्टितवान् । सः सर्पः तत्रैव मृतः जातः ।

तदनन्तरक्षणे जागरिता राजकुमारी पत्युः मुखात् प्रवृत्तं सर्वं विदित्वा तं बहुधा प्रशंसितवती । स्वल्पे एव समये एषा वार्ता राज्ञा अपि ज्ञाता अभवत् ।

राजा नागराजम् अत्यन्तं प्रीत्या आलिङ्ग्य अश्लाघत - ''मम एकमात्रपुत्र्याः प्राणानां रक्षणेन भवता महान् एव उपकारः कृतः'' इति ।

ततः सः किमर्थं पुत्री दत्ता इत्यस्य पृष्ठ-



भूमिकां नागराजं श्रावितवान् -

''मम पितामहः अजयवर्धनः नाम । सः सुदीर्घकालं राज्यभारम् ऊढ्वा वार्धक्ये पुत्राय जयवर्धनाय, तन्नाम मम पित्रे, राज्यशासन-दायित्वं दत्त्वा शेषजीवनं भगवच्चिन्तनेन यापयितुम् अरण्ये कस्यचित् मुनेः आश्रमं गतवान् ।

ततः कतिपयदिनानाम् अनन्तरं मम पिता जयवर्धनः मृगयार्थम् अरण्यं गत्वा सर्पदंशनेन मृतः अभवत् । तदा अहं महेन्द्रपुरीराज्यस्य राजा अभवम् । ततः षण्णां वर्षाणाम् अनन्तरं मम पत्नी काञ्चित् सुन्दरीं बालिकां प्रसूतवती । अरण्ये वसतः पितामहस्य आशिषं प्राप्तुम् अहं पुत्रीम् आश्रमं प्रति अनयम् ।

अजयवर्धनः प्रपौत्र्याः दर्शनमात्रेण एव निश्चेतनः इव अभवत् । सः क्षणं यावत् नेत्रे निमील्य ध्यानमग्नः भूत्वा पुनः उन्मीलितनेत्रः सन् माम् अकथयत् - ''यथा भवतः पिता सर्पदंशनेन मृतः, तथैव अस्याः अपि सर्पात् अपायः अस्ति । अतः अस्याः नागाम्बा इति नाम कृत्वा देवतापूजनं कारयतु । यदा एषा विवाहयोग्या भविष्यति तदा वरस्य चयने सावधानः भवतु भवान् । सहसा निर्णयं न स्वीकरोतु । अस्याः पतिः महापराक्रमी, साहसी च भवेत्' इति ।

राजकुमारी यदा युवतिः जाता ततः आरभ्य सर्पात् सम्भाव्यमानम् अपायम् अहं सदा चिन्तयामि स्म, विवाहस्य निर्वर्तनाय वरस्य अन्वेषणं करोमि स्म अपि ।

एतादृशे प्रसङ्गे सैनिकः कश्चन आगत्य मां सूचितवान् यत् ग्रामजनाः भवन्तं भाविनं राजानं कथयन्ति इति । मया सत्वरमेव भवान् आकारितः, भवतः कुलगोत्रादिकं ज्ञातं च । भवतः जन्मकुण्डल्याः नागाम्बायाः जन्म-कुण्डल्याः च आनुरूप्यम् आसीत् । मया एतदपि ज्ञातं यत् भवान् सर्पग्रहणे, औषधदाने च कुशलः इति । दैवेन एव एतत् सङ्कल्पितम् इति मत्वा अहं भवतोः विवाहं निर्वर्तितवान्'' इति ।

वार्धक्यं यदा प्राप्तं तदा विजयवर्धनः नागराजस्य नाम नागराजवर्धनः इति कृत्वा तं सिंहासने उपवेशितवान् । किन्तु सर्पवर-ग्रामीणाः तु तं प्रीत्या 'अहितुण्डिकराजः' इत्येव निर्दिशन्ति स्म ।



# चन्दमामाप्रश्नावली - ८



यः समुचितम् उत्तरं दास्यति सः अर्हति रू.२५०/- पारितोषिकत्वेन*

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आम्, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

एवं क्रियतां भवद्भिः - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतः (पिन्कोड्सहितः) च प्रेषणीयम् । ३. एकस्य कुटुम्बस्य एकः एव सदस्यः अत्र भागं वोढुम् अर्हः । ४. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या लिख्यताम् । ५. पिहितपत्रस्य उपरि चन्दमामाप्रश्नावली - ८ इति लेखनीयम् । ६. सप्टम्बर्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ७. नवम्बर्मासे परिणामः प्रकाशयिष्यते ।

१. कस्यचित् मानवस्य, कस्याश्चित् देवतायाः च परिचयः आदौ आनन्देन एव आरब्धः, किन्तु अग्रे मानवस्य दुस्साहसगर्वादिकारणतः सः विषादान्ततां गतः । एषा विदेशीया कथा का ? तस्य मानवस्य, तस्याः देवतायाः च नाम किम् ?

२. २०५० तमे वर्षे भारतस्य जनसङ्ख्या का भवेत् ?

३. 'योग्यताहीनस्य जनस्य साहाय्यकरणं महते पापाय' इत्येतां नीतिं पिशाचीं पाठितवत्याः गृहिण्याः नाम किम् ? कस्यां कथायाम् अस्ति अयं विषयः ?

४. चन्द्रगुप्तविक्रमादित्यः यदा भारतं शास्ति स्म तदा (क्रि.श. ३७५ - ४१३) कः चीनयात्रिकः भारते प्रवासं कृतवान् ?

५. 'पोलो'क्रीडायाः मूलम् अस्ति अस्मद्देशस्य किञ्चन नगरम् इति श्रूयते । तस्य नगरस्य नाम किम् ?

६. सुखमयजीवनयापनाय परिश्रमः एव श्रेष्ठः मार्गः इति कस्यां कथायां निरूपितम् अस्ति ?

७. एतत् चित्रं कस्याः कथायाः ?



# शारदायाः निर्णयः

भूषणस्य पार्वत्याः च एकमात्रपुत्री शारदा । भूषणः भूस्वामिवंशीयः एव । सर्वदा अन्येषां साहाय्ये निरतः भवति स्म सः ।

युवतिः शारदा अतीव बुद्धिमती । ग्रामजनस्य कस्यापि समस्या उत्पन्ना भवति चेत् क्षणाभ्यन्तरे परिष्कारं सूचयति स्म सा । पुत्र्याः एतादृशीं प्रतिभाम् अवलोकितवतोः मातापित्रोः आनन्दस्य कापि सीमा एव न आसीत् ।

शारदायाः विवाहप्रयत्नः आरब्धः । भूषणः ज्योतिषिकं कञ्चित् आहूय एतं विषयम् उपस्थापितवान् । अनुक्षणं सः स्यूतात् एकं भावचित्रं स्वीकृत्य प्रदर्शयन् अवदत् - ''रामपुरनिवासिनः



एतस्य नाम चन्द्रः इति । मातापित्रोः अद्वितीयः पुत्रः एषः । स्वच्छमनस्कः एषः स्वनाम सार्थकं करोति । किन्तु चन्द्रे इव एतस्मिन् कलङ्कः कोऽपि नास्ति । यद्यपि एषः न धनिकः, तथापि जीवननिर्वहणाय यावत् अपेक्षितं तावत् तु अस्ति । सर्वदा आप्तैः पूर्णं दृश्यते एतेषां गृहम्'' इति ।

तदनन्तरं द्वितीयं चित्रं दर्शयित्वा सः पुनः अवदत् - ''भास्करनामकः एषः शङ्खवरग्रामे निवसति । समग्रः आकाशः मेघैः आच्छन्नः भवति चेदपि एषः भास्करः मध्याह्नसूर्यवत् प्रकाशमानः सर्वेषां दृष्टिपथे तिष्ठति । सूर्यास्तः पश्चिमदिशि सम्भवति, किन्तु एषः भास्करः तु कदापि अस्तङ्गतः न भवति । अस्य सम्पत् अमिता एव । तन्नाम चन्द्रस्य यावती स्यात् ततः चतुर्गुणिता । स्वस्य परिवारस्य एकमात्रम् उत्तराधिकारी अयम्'' इति ।

तस्याः मातापितरौ - ''एतस्मिन् विषये चतुर्णां दिनानाम् अनन्तरं निर्णयः सूचयिष्यते'' इति उक्त्वा तं प्रेषितवन्तौ । तस्मिन् दिने रात्रौ ताभ्यां शारदा पृष्टा - ''एतस्मिन् विषये भवत्याः अभिप्रायः कः ?'' इति ।

तदा उक्तवती - ''अहं चन्द्रम् एव पतित्वेन इच्छामि'' इति ।

''किम् उच्यते पुत्रि ? चन्द्रतः अपि भास्करस्य सम्पत् अधिका । आवयोः चिन्तनम् आसीत् - भवती यदि भास्करं परिणयेत् तर्हि सुखेन जीवेत् इति'' इति अवदत् पार्वती ।



तदा शारदा तौ अवदत् - "भवतोः सम्पदि एव दृष्टिः । ज्योतिषिकस्य वचनस्य आन्तर्यं भवद्भ्यां न अवगतम् इति अहं मन्ये । ज्योतिषिकस्य कथनम् आसीत् यत् भास्करः सूर्यसमानः, सः कदापि अस्तं न गच्छति इति । तस्य अर्थः - क्रोधस्वभावः सः सर्वेषां नियन्त्रणं कुर्वन् सर्वत्र स्वाधिकारं स्थापयितुं प्रयतते इति । आकाशः मेघैः आवृतः चेदपि अयं प्रकाशते इत्यस्य अर्थः - स्वीयम् अभिप्रायं सर्वत्र प्रसारयन् सर्वेऽपि मम वचनम् एव मन्येरन् इति चिन्तयन् दुराग्रहवान् सः अन्यस्य कस्यापि वचनम् अङ्गी-कर्तुं सिद्धः न इति । एतादृशेन सह सुखेन जीवितुं कथं शक्नुयाम् अहम् ?" इति ।

"एवं तर्हि चन्द्रस्य विषये किं वदति भवती ?" इति पृष्टवती माता ।

"चन्द्रस्य स्वप्रकाशः नास्ति । सः सूर्यस्य कान्तिं गृह्णाति, शीतलान् किरणान् च विकिरति । अस्य अर्थः अस्ति - मातापित्रोः अन्येषां ज्येष्ठानां च मार्गदर्शनं प्राप्य अयं पदं निक्षिपति इति । तम् अहं परिणेष्यामि चेत् मत्तः अपि अभिप्रायं प्राप्य एव निर्णयं कुर्यात् सः । तेन मम परिवारे कोऽपि क्लेशः न उद्भवेत्, भेद-भावोऽपि न भवेत् । अतः एव 'सः स्वच्छ-मनस्कः' इति निर्दिष्टं ज्योतिषिकेण । यत्र गृहजनाः सर्वैः सह उत्तमं व्यवहारं कुर्वन्ति तत्र एव सर्वदा आप्तानां गमनागमनं भवति । मानवीयैः लक्षणैः पूर्णः चन्द्रः एव मम पतिः भवितुं योग्यः । तत्र यावत् लभ्येत तावता अहं सन्तुष्टा भविष्यामि" इति उक्तं शारदया ।

भूषणाय तत्पत्न्यै च पुत्र्याः विश्लेषणं नितराम् अरोचत । पुत्र्याः बुद्धिमत्तां दृष्ट्वा नितरां सन्तुष्टौ तौ चन्द्रेण सह तस्याः विवाहं कारित-वन्तौ ।

***- पि. वैष्णवी, हैदराबाद् (आ.प्र.)***




# अतिप्राचीनानि शिलाङ्कितानि चित्राणि

मध्यप्रदेशस्य राजधान्याः भोपालनगरात् ४० क्रोशमिते दूरे बिम्बेटकनामकं स्थानम् अस्ति । क्रिस्ताब्दात् ६०० तमात् वर्षात् पूर्वतनानि शिलाङ्कितानि चित्राणि दृश्यन्ते तत्रत्यासु गुहासु । भूमौ उपलभ्यमानेषु अतिप्राचीनानि वर्णरञ्जितानि मानवजीवनसङ्केतकानि एतानि इति विश्वस्यते सर्वैः तज्ज्ञैः ।

लक्षात् वर्षेभ्यः पूर्वं रचितानि एतानि चित्राणि केनचित् पुनर्नवीकृतानि स्युः इति भासते एतेषाम् आकृतेः दर्शनात् । मानवानां, पशूनां, पक्षिणां च चित्राणि, रेखा-वर्तुल-चतुष्कोण-प्रभृतिभिः निर्मितानि दृश्यन्ते अत्र । पचतः क्रीडतः युद्ध्यमानान् च जनान् द्योतयन्ति एतानि चित्राणि मानवानां प्रगतिं सूचयन्ति । मृगयावृत्तितः कृषिकत्वप्राप्तिः, ततः परिवार-व्यवस्थायाः अवलम्बनं च सूचयन्ति एतानि ।



पुरुषाः स्त्रियः च अत्र परस्परं हस्तं गृहीत्वा नृत्यन्तः शोभायात्रादिद्वारा उत्सवम् आचरन्ति स्म इति अवबुध्यते । आश्चर्यं नाम एतादृश्यः भव्यकलापूर्णाः गुहाः केवलेभ्यः पञ्चाशतः वर्षेभ्यः पूर्वम् एव मानवस्य दृष्टिपथम् आगताः इति !!




# लम्बोदरस्य वाञ्छा

रामपुरे रङ्गनाथः नाम अर्चकः राममन्दिरे पूजां करोति स्म । जानकीम् ऊढवतः तस्य दशवर्षाणाम् अनन्तरं पुत्रः जातः । सुन्दरः इति तस्य नाम कृतम् । विशेषवात्सल्येन ताभ्यां दम्पतीभ्यां पोष्यते स्म स्वपुत्रः ।

सुन्दरः बाल्यात् आरभ्य अपि लम्बोदरः आसीत् । अहर्निशं खादने एव तस्य रुचिः । मन्दिरे वितरणाय सज्जीकृतस्य प्रसादस्य अर्धभागं सः एव खादति स्म । अतः सः स्थूलः जातः । तस्मात् तस्य आलस्यम् अपि अवर्धत । किमपि कार्यम् अकुर्वन् एव समयं यापयति स्म सः ।

मन्दिरस्य पूजार्थम् अपेक्षितानां मन्त्राणां पाठनं कुर्याम् इति रङ्गनाथस्य महती इच्छा आसीत् । एतदर्थं तेन कृताः सर्वेऽपि प्रयासाः व्यर्थाः एव अभवन् । सहस्रे प्रयत्नेषु कृतेषु अपि पाठितानां श्लोकानां पुनः उच्चारः असाध्यः एव अभवत् सुन्दरस्य ।

विंशतिवर्षीयः सः शारीरकसम्पदं तु प्राप्तवान् । किन्तु तस्मिन् धैर्यस्य लेशः अपि न प्रतीयते स्म । स्वच्छायायाः अपि भीत्वा सः कम्पितः भवति स्म । चिन्ताक्रान्तः रङ्गनाथः कदाचित् तम् उक्तवान् – ''पुत्र ! मन्दिरस्य अर्चकः भवितुम् अपि नार्हति भवान् । एवं स्थिते भवतः आजीविका कथं भवेत् ?'' इति ।

तदा सुन्दरः अवदत् – ''पितः ! अस्माकं ग्रामे कोऽपि मिष्टान्नापणः नास्ति । अतः अस्माकं वीथ्यां काचेन सुसज्जम् आपणं कञ्चित् मह्यं व्यवस्थापयतु भवान् । अहं स्वयम् एव मिष्टान्नवाणिज्येन प्रभूतं धनम् अर्जयिष्यामि'' इति ।

सुन्दरस्य एतादृशेन उत्तरेण कुपितः रङ्गनाथः अकथयत् – ''तादृशस्य वाणिज्यस्य निमित्तं महान् धनराशिः आवश्यकः भवति । कनीयस्वसुः विवाहभारोऽपि मयि अस्ति ।



अतः भवान् मन्त्राभ्यासं कृत्वा अर्चकः भवति चेत् एव वरं स्यात् । अगणितगुणराशिः रामः भवतः रक्षणं करिष्यति'' इति ।

''मन्त्राणाम् अभ्यसनं तु मम सामर्थ्यपरिधेः बहिर्भूतं कार्यम् । भवता पाठितं हनूमत्स्तोत्रं कण्ठस्थीकर्तुम् एव वर्षदशकं स्वीकृतं मया । एवं सति मन्त्राभ्यासः कथं शक्येत ?'' इति सुन्दरेण उक्तम् ।

अथ कदाचित् रङ्गनाथस्य भगिन्याः विवाहस्य निश्चयः अभवत् । अतः रङ्गनाथः समीपस्थं नगरं गत्वा भगिन्याः कृते दश शाटिकाः अक्रीणात् । यावत् सः शाटिकाबन्धं गृहीत्वा प्रस्थातुम् उद्युक्तः तावाता तत्र आगतेन परिचितेन कस्यचित् दूरबन्धोः मृत्युवार्ता श्राविता । रङ्गनाथः अनुक्षणं तं बन्धम् आपणिकस्य हस्तगतं कृत्वा - ''इदमिदानीम् एव कश्चित् मम बन्धुः मृतः । अहं तत्र गत्वा श्वः आगत्य एतं शाटिकाबन्धं नेष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

मृतस्य अन्त्यसंस्कारान् समाप्य यावत् सः प्रत्यागतः तावता मध्याह्नः जातः आसीत् । अस्वास्थ्यम् अपि तं बाधते स्म । अतः सः सुन्दरम् आहूय - ''भवान् वस्त्रापणं गत्वा शाटिकाबन्धं स्वीकृत्य अन्धकारप्रसरणात् पूर्वम् एव प्रत्यागच्छतु । प्रयाणावसरे जागरूकता भवतु । यतः मार्गे चोराणां पीडा अधिका अस्ति'' इति उक्त्वा शकटभाटकार्थं विंशतिं रूप्यकाणि दत्तवान् ।

सुन्दरः सायं नगरं प्राप्य वस्त्रापणं प्रविष्टवान् । ''पित्रा क्रीताः शाटिकाः नेतुम् किं भवान् आगतवान् ?'' इति पृच्छन् आपणस्वामी सुन्दराय तं वस्त्रबन्धं समर्पितवान् ।

सुन्दरः तं बन्धं शिरसि आरोप्य वीथ्यां मन्दं गच्छन् कञ्चन मिष्टापणम् अपश्यत् । 'शकटस्य भाटकरूपेण विंशतिं रूप्यकाणि किमर्थं दद्याम् ? एतेन धनेन बहुविधानि मधुरखाद्यानि क्रेतुं शक्यानि । तानि खादन् अहम् आनन्देन गृहं प्राप्स्यामि' इति अचिन्तयत् सः ।

मधुरखाद्यानि क्रीत्वा खादन् पद्भ्याम् एव गृहदिशि प्रस्थितवान् सः । तावता सर्वत्र घनान्धकारः प्रसृतः आसीत् । वृक्षस्य अधः पञ्च पिशाच्यः उपविश्य परस्परं जल्पन्त्यः आसन् । ताः मार्गे गच्छन्तं सुन्दरं दृष्ट्वा स्त्रीरूपेण परिवृत्ताः भूत्वा करताडनेन तं स्वनिकटम् आहूतवत्यः ।

क्षणं यावत् भीतः सुन्दरः स्वल्पं धैर्यं प्राप्य

अचिन्तयत् - 'एताः चोराः तु न स्युः । यतः अत्र तु स्त्रियः सन्ति । चोराः पुरुषाः भवेयुः' इति । तावता ताः पिशाच्यः तस्य समीपम् आगत्य अवदन् - ''वयं बन्धोः विवाहार्थं प्रस्थितवत्यः । मार्गभ्रष्टाः सत्यः इदानीम् अत्र स्मः । भवतः शिरसि विद्यमाने बन्धे किम् अस्ति इति वदतु'' इति ।

''एषः शाटिकानां बन्धः । मम पित्रा स्वभगिन्याः विवाहार्थं क्रीताः शाटिकाः अत्र सन्ति'' इति उक्तं सुन्दरेण सधैर्यम् ।

''शाटिकाः कीदृश्यः सन्ति इति ज्ञातुम् इच्छा अस्माकम् । अतः कृपया ताः दर्शयतु भोः'' इति वदन्त्यः ताः पिशाच्यः बन्धम् आकृष्टवत्यः ।

सुन्दरः सत्वरम् एव निकटस्थं कञ्चित् शुष्कदण्डं गृहीत्वा - ''भवन्तः स्त्रीरूपेण आगताः चोराः एव इति भासते । मम वस्तु मा स्पृशन्तु । जागरूकता भवतु'' इति वदन् दण्डं दर्शितवान् ।

ताः कञ्चित् लघुस्यूतं तस्मै अर्पयन्त्यः अकथयन् - ''एतस्मिन् स्यूते षोडशोत्तरशतं सुवर्णनाणकाणि सन्ति । वध्वे उपायनीकर्तुं एतं नयन्त्यः स्मः वयम् । विवाहमुहूर्ते उपस्थातुं न शक्यते । अतः एतत् धनं स्वीकृत्य शाटिकाः ददातु कृपया'' इति ।

सुवर्णनाणकशब्दं श्रुतवतः सुन्दरस्य नेत्रे विद्योतमाने अभवताम् । अनुक्षणं सः भूमौ उपविश्य स्यूतम् उद्घाट्य नाणकानि गणयितुम् उद्युक्तः अभवत् । विचित्रहासं श्रुत्वा सः शिरः उन्नीय अपश्यत् । ताः पिशाच्यः शाटिकानां धारणे मग्नाः दृष्टाः तेन ।

'एताः पिशाच्यः एव स्युः' इति अवगतं तेन । ताभ्यः भीतः सः उच्चैः हनूमत्स्तोत्रस्य पठनं समारब्धवान् । तेन ताः पिशाच्यः ततः निर्गत्य तिन्त्रिणीवृक्षे उपाविशन् ।

हनूमन्तं स्मरन् एव सुन्दरः शाटिकाः सर्वाः सङ्गृह्य बद्ध्वा, नाणकस्यूतेन सह ततः प्रस्थाय प्रातः गृहं प्राप्तवान् ।

एवं तासां पिशाचीनां कृपया सुन्दरस्य मातुलान्याः विवाहः सवैभवं सम्पन्नः । एतस्मात् सन्तुष्टः तदीयः पिता तस्य कृते सुसज्जं मिष्टापणं व्यवस्थापितवान् ।

एवं लम्बोदरस्य सुन्दरस्य अपेक्षा अपि पूर्णा अभवत् ।



# बिहारीया जानपदकथा

## कपटः संन्यासी

राजप्रासादस्य प्राकारस्य पार्श्वे कश्चन दीर्घशाखी वटवृक्षः आसीत् । तस्य अधः कश्चन ध्यानमग्नः पुरुषः उपविष्टः आसीत् । सः श्मश्रुरहितः सुन्दरः च । प्रातः आरभ्य सायङ्कालपर्यन्तं तया एव मुद्रया उपविष्टः सः नेत्रोन्मीलनं न अकरोत् एव । केचन तेन मार्गेण गच्छन्तः तस्य पुरतः किञ्चित्कालम् उपविश्य पुनः अग्रे अगच्छन् ।



एषः अचिरात् एव नेत्रोद्घाटनं कुर्यात् इति भावयन्तः अन्ये केचन प्रतीक्षरताः तत्रैव उपाविशन् । किन्तु तेन सह वार्तालापं कर्तुं तेषां धैर्यं न आसीत् । स्वल्पसमयानन्तरं तेऽपि उत्थाय गतवन्तः ।

गमनात् पूर्वं ते कानिचन नाणकानि तस्य पुरतः स्थापितवन्तः । अल्पे एव काले तेषां नाणकानां संख्या वर्धमाना अभवत् । तदीयं खादनं पानं वा केनापि न दृष्टम् आसीत् । अतः जनेषु विश्वासः दृढः अभवत् यत् एषः संन्यासी एव भवेत् इति ।

रात्रिः उपस्थिता । केचन तस्य अनुयायिनः तावता तत्र उपस्थिताः । तैः आनीतं खादितवान् सः । ततः ते सर्वे निश्शब्दं निर्गताः लुण्ठनकार्यार्थम् । सः युवा संन्यासी अपि वटस्य पृष्ठतः गतवान् ।

राजभवनस्य पार्श्वे वटस्य अधः कश्चन संन्यासी उपविष्टः अस्ति इति वार्ता राज्ञः कर्णौ अपि प्रविष्टा । राजा अपि तस्य दर्शनस्य इच्छया अङ्गरक्षकेण सह तत्र आगतवान् । राज्ञः अङ्गरक्षकः तं संन्यासिनं जागरयन् - ''स्वामिन् ! राजा भवतः दर्शनाय उपस्थितः अस्ति'' इति अवदत् ।

सः संन्यासी शनैः नेत्रे उन्मील्य - 'वत्स ! दीर्घायुष्मान् भव' इति आशिषा अन्वगृह्णात् ।

राजा तम् अवदत् - ''अहं राजप्रासादे एव सर्वविधां व्यवस्थां कल्पयिष्यामि । कृपया तत्रैव ध्यानम् अनुवर्तयतु भवान्'' इति ।

''यथा भवान् इच्छति तथैव भवतु नाम । किन्तु कश्चन निर्बन्धः यत् मम अनुयायिनः अपि मया सहैव निवसेयुः इति'' इति उक्त्वा पुनः नेत्रे निमील्य ध्यानस्थितिम् अवलम्बितवान् सः संन्यासी । राजा तं पुनरपि प्रणम्य ततः निर्गतवान् ।

राजभवनस्य प्राङ्गणे कुटीरनिर्माणाय आज्ञा प्रदत्ता राज्ञा । कुटीरं निर्माय सैनिकाः युवसंन्यासिनः समीपं गत्वा न्यवेदयन् - ''कुटीरः तु सिद्धः । अनुयायिनाम् आगमनस्य अनन्तरं तत्रभवान् कुटीरं प्रवेष्टुम् अर्हति'' इति ।

यदा सः युवसंन्यासी त्रिभिः अनुयायिभिः सह राजभवनं प्रविष्टः तदा द्वारि एव राजा तस्य स्वागतम् अकरोत् । राज्ञा द्वारपालकाः सूचिताः - ''एतस्य एतदनुयायिनां वा बहिर्गमनं कदापि मा अवरुध्यताम्'' इति ।

अनन्तरदिने प्रातः राजा कुटीरम् आगतः । तदवसरे संन्यासी गभीरध्याने मग्नः आसीत् । यदा तस्य अनुयायी भुजं स्पृष्टवान् तदा सः मन्दगत्या नेत्रे उद्घाट्य अपश्यत् ।

''स्वामिन् ! कुटीरेऽस्मिन् कोऽपि क्लेशः तु नास्ति इति मन्ये'' इति अवदत् राजा ।

तदा संन्यासी मधुरस्वरेण - ''भवता बहुधा उपकृतः अहम् । वत्स ! कृतज्ञता कथं ज्ञापनीया मया ?'' इति ।

''जीवनसाफल्याय पुत्रप्राप्त्या माम् अनुगृह्णातु भवान्'' इति प्रार्थितवान् राजा ।

''भवत्प्रार्थना भगवता श्रुता अनुमता च''



इति अवदत् संन्यासी ।

ततः अन्तःपुरं प्रति गमनावसरे राजा अङ्गरक्षकम् आदिशत् - ''एतेषां कृते राजभोजनव्यवस्थां करोतु'' इति । तद्दिने सायम् अङ्गरक्षकः राजानम् असूचयत् - 'संन्यासी राजभोजनं प्रतिप्रेषितवान् अस्ति' इति । एतत् श्रुत्वा राजा अचिन्तयत् - 'एषः महानुभावः अन्नपानादिकं विना अपि जीवितुं समर्थः अस्ति इति भाति' इति ।

अथ कदाचित् राज्ञः एकमात्रपुत्री अपि तस्य संन्यासिनः दर्शनम् इष्टवती । सा आशावती आसीत् यत् एषः मम भाविनः पत्युः विषये किमपि वदेत्, स्वस्य दिव्यशक्त्या पत्युः



मुखं च दर्शयेत् इति ।

अतः एकाकितया सा तस्य मेलनाय अवसरं प्रतीक्षते स्म । कस्याञ्चित् रात्रौ तया अवलोकितं यत् सर्वाः दास्यः अग्रिमदिनस्य पर्वणः सन्नाहे मग्नाः सन्ति इति । एतम् अवसरं त्यक्तुम् अनिच्छन्ती सा निश्शब्दं बहिः आगत्य कुटीरदिशि प्रस्थितवती ।

तस्मिन् समये एकाकितया आगतां राजकुमारीं दृष्ट्वा संन्यासी नेत्रे विशालीकृत्य अवदत् - ''आगच्छतु, मन्येऽहं भवती राजभवनतः आगता स्यादिति'' इति ।

''आम् । अहं राजकुमारी मालविका अस्मि'' इति अवदत् राजकुमारी ।

''भवत्याः उपस्थित्या अहं नितरां सन्तुष्टः अस्मि । सुन्दरि ! किमहं कर्तुं शक्नुयां भवत्याः सन्तोषाय ?'' इति पृष्टवान् संन्यासी ।

''यः मत्पाणिं ग्रहीष्यति, तस्य विषये भवान् दिव्यशक्त्या यदि वदेत्, तस्य मुखं च यदि दर्शयेत् तर्हि महान् अनुग्रहः भवेत्'' इति अवदत् राजकुमारी ।

स्वल्पसमयं यावत् अन्तर्मुखदृष्टिकताम् अभिनीय सः संन्यासी उच्चैः हसन् उक्तवान् - ''अये सुन्दरि ! मम मुखे का न्यूनता ? भवत्याः पतिः भवितुं किम् अहं न अर्हः ? यदा भवतीम् अहं परिणेष्यामि तदा युवराजः तु भविष्यामि एव सहजतया'' इति ।

यदा तेन तस्याः हस्तः सोद्वेगं गृहीतः तदा सा तु नितरां विस्मिता भीता च अभवत् । सः एवंविधं व्यवहारं कुर्यात् इति राजकुमारी स्वप्नेऽपि न ऊहितवती आसीत् । 'एतादृशात् संन्यासितः आशीर्वादं प्राप्तुम् आगता अहं मूर्खा एव' इति चिन्तयन्ती सा सत्वरमेव कुटीरात् बहिः आगन्तुम् उद्युक्ता अभवत् ।

गच्छन्तीं तां वारयितुं संन्यासी अवदत् - ''हे राजकुमारि ! मा गच्छतु भवती । भवत्याः भाविनः पत्युः मुखम् अहं दर्शयिष्यामि'' इति ।

ततः सः भक्तैः फलपुष्पपूर्णा स्थाली या समर्पिता आसीत् तां रजतस्थालीं गृहीतवान् ।

राजकुमारी मालविका क्षणं यावत् द्वारे स्थितवती । तत्र तया पादे कस्यचित् घट्टनम्

अनुभूतम् इव । वेदनाम् अनुभवन्ती सा त्वरितम् एव ततः अन्तःपुरं प्रविश्य स्वप्रकोष्ठं प्राप्तवती । भगवतः कृपया सा केनापि न अवलोकिता । सा स्वस्य पादस्य परीक्षाम् अकरोत् । पादे गम्भीरः व्रणः जातः आसीत् । व्रणात् रक्तं स्रवति स्म । अतः मूलादिरस-लेपनं कृत्वा शय्यायां शयितवती सा ।

तदनन्तरदिने यदा राजा कुटीरं गतवान् तदा सः संन्यासी ध्यानमग्नः न आसीत् । प्रत्युत कोपोद्विग्नः आसीत् । अतः राजा तम् अपृच्छत् - ''स्वामिन् ! किं सञ्जातम् ?'' इति । संन्यासिना उत्तरं किमपि न उक्तम् ।

''किमपि अनानुकूल्यम् अनुभूतं किम् अत्र ?'' इति पुनः पृष्टं राज्ञा ।

तदा राज्ञः दिशि गभीरदृष्टिं प्रसारयन् संन्यासी अवदत् - ''भवतः राज्यं काचित् दुष्टशक्तिः प्रविष्टा अस्ति । अतः सावधानता भवतु'' इति ।

''दुष्टशक्तिः !! कीदृशी सा ?'' इति आश्चर्येण अपृच्छत् राजा ।

''गतरात्रौ काचित् सुन्दरी आगत्य मम ध्यानभङ्गम् अकरोत् । तां व्रणितां कृत्वा अहम् इतः प्रेषितवान्'' इति उक्तवान् संन्यासी ।

''भवतः ध्यानभङ्गं कृतवतीं ताम् अन्विष्य अवश्यं दण्डयिष्यामि'' इति प्रतिज्ञाय राजा राजभवनं प्रविश्य भटान् आज्ञापितवान् - ''गतरात्रौ या राजभवनं प्रविष्टवती, ताम् अत्र आनयन्तु'' इति ।

भटाः सर्वत्र विचार्य प्रत्यागत्य राजानम् असूचयन् - ''गतरात्रौ कापि युवतिः राजभवनं न प्रविष्टवती, यतः संन्यासिनः अनुनायिनां निष्क्रमणानन्तरं द्वारं पिहितम् एव आसीत् । राजभवनतः एव कापि आगतवती भवेत्'' इति । राज्ञा राजभवने विचारितम् । किन्तु राज्ञी, तस्याः दास्यः वा एतद्विषये योग्यम् उत्तरं न दत्तवत्यः । 'सा सुन्दरी युवतिः मम पुत्री एव किं भवेत् ? राजकुमार्याः पादः किं व्रणितः ?' इति सन्देहः प्राप्तः राज्ञा ।

सः काञ्चित् दासीम् आहूय अपृच्छत् - ''राजकुमार्याः पादे किं व्रणः कोऽपि अव-लोकितः भवत्या ?'' इति ।

तदा सा अवदत् - ''आं, महाराज ! मालविकायाः पादे व्रणचिह्नं दृश्यते । उद्याने भ्रमणसमये पतितायाः शाखायाः स्पर्शेन एवं





जातम् इति अस्मान् उक्तवती सा । किन्तु तया एकाकिन्या उद्यानं कदापि न गतम् । उद्याने कापि पतिता शाखा अपि न दृष्टा अस्माभिः'' इति ।

''भवतु नाम । एतं विषयं महाराज्ञीं मालविकां वा भवती न वदतु'' इति ताम् अवदत् राजा ।

ततः सः अङ्गरक्षकप्रमुखम् आहूय अवदत् - ''संन्यासिनः तदनुयायिनां च चलनादिषु कश्चन दृष्टिपातः भवतु सदा'' इति ।

तस्य निर्गमनस्य अनन्तरं राजा संन्यासिनः मेलनाय प्रस्थितः । सः तं निमीलितनेत्रम् अपश्यत् । कस्यापि आगमनं भवेत् किम् इति सतर्कता अपि तस्मिन् तेन दृष्टा ।

राज्ञः आगमनेन जातं पादशब्दं श्रुत्वा - ''कः तत्र ?'' इति पृष्टवान् संन्यासी । राजा न किमपि प्रत्यवदत् ।

नेत्रे उन्मील्य संन्यासी मन्दहासं प्रकटयन् - ''महाराजः भवान् !!'' इति साश्चर्यम् उक्त्वा - ''सा गृहीता किं भवद्भिः ?'' इति पृष्टवान् ।

''अधुना यावत् न गृहीता । प्रायः अचिरात् एव ग्रहीष्यते । सा का इति अभिज्ञातम् अस्ति । तस्याः पादे व्रणः अवलोकितः । सा सकृत् स्वस्था भविष्यति चेत् गृहीत्वा दण्डयिष्यामः'' इति अवदत् राजा ।

संन्यासी अस्वस्थचित्तः अभवत् । सः अनुयायिनम् आहूय जलम् आनाय्य पीत्वा - ''महाराज ! विश्रान्तिम् इच्छामि अहम् । कृपया अनुमन्यताम्'' इति अवदत् ।

राज्ञः संशयः दृढः अभवत् । किन्तु द्वित्राणां दिनानाम् अनन्तरमेव अग्रिमः निर्णयः इति निश्चितवान् सः ।

अनन्तरदिने प्रातः अङ्गरक्षकप्रमुखः राज्ञः समीपम् आगत्य अवदत् - ''प्रभो ! गतरात्रौ संन्यासी अपि बहिः गतवान् आसीत् । अधुना यावत् सः न प्रत्यागतः'' इति ।

किञ्चिदनन्तरं सः पुनः कुटीरं गत्वा प्रत्यागत्य राजानम् असूचयत् - ''सः संन्यासी कुटीरं प्रत्यागतः अस्ति इदानीम्'' इति ।

''अधुनैव तत्र गच्छाम'' इत्यवदत् राजा ।

यथापूर्वं संन्यासी नेत्रे निमील्य उपविष्टः आसीत् । आगन्तॄणां पादध्वनिः तु लक्ष्यते

स्म एव तेन । संन्यासिनः कुशलप्रश्नस्य प्रतीक्षां अकृत्वा अवदत् राजा –''अङ्गरक्षकप्रधानः वदति यत् भवता या सुन्दरयुवतिः वर्णिता सा प्रायः गतरात्रौ अत्र आगता स्यात् इति । कुटीरे यदि अन्विष्येत तर्हि सा प्राप्येत अपि । भवतः अनुयायिनः कुत्र सन्ति ?'' इति ।

''मम कृते अन्नं पानीयं च आनेतुं बहिः गतवन्तः ते'' इति अवदत् संन्यासी । राजा संन्यासिनः पुरतः उपविष्टः आसीत् । राज्ञः अनुज्ञां प्राप्य कुटीरस्य अन्तः गतवान् रक्षकप्रमुखः । स्वल्पसमयानन्तरं द्वयोः हस्तयोः सुवर्णाभरणनाणकयुक्तान् स्यूतान् वस्त्राणि च गृहीत्वा बहिः आगतवान् सः ।

''प्रभो ! अन्तः कोऽपि नास्ति । किन्तु एतानि प्राप्तानि तत्र'' इति वदन् तानि राज्ञे अदर्शयत् रक्षकप्रमुखः ।

''सा पिशाची व्रणिता सती एतं निधिम् अन्तः एव परित्यज्य गतवती स्यात् खलु ?'' इति उपहासपूर्वकम् अवदत् राजा ।

भीतस्य संन्यासिनः मुखात् कोऽपि शब्दः न निर्गतः । अचिरात् एव ते त्रयः अनुयायिनः अपि प्रत्यागताः । तेषां स्यूतेषु आहारः न आसीत्, प्रत्युत दृढानि वस्तूनि आसन् ।

राजा उत्थाय रक्षकप्रमुखम् आदिशत् – ''कतिपयान् भटान् आह्वयतु'' इति ।

रक्षकप्रमुखः ततः गत्वा त्रिचतुरैः भटैः सह प्रत्यागतवान् । तावत् राजा द्वारे एव स्थितवान् आसीत् । ''एते दुष्टाः कारागारे प्रक्षिप्यन्ताम्'' इति आदिशत् सः । तेषां बन्धनानन्तरं तैः सङ्गृहीतं धनाभरणादिकं राज्ञः समक्षे राशीकृतम् । ''एषः संन्यासी, एतदनुयायिनः च लुण्ठाकाः । जनानां लुण्ठनेन सम्पादिता इयं सम्पत् तत्तत्सम्बद्धजनेभ्यः दातव्या'' इति अवदत् मन्त्री ।

'एतां घटनां कोऽपि मालविकां न वदेत्' इति तत्रत्यान् असूचयत् राजा ।





# औषधं चिन्ताव्याधेः

प्राचीने काले ब्रह्मदत्तनामकः राजा काशीराज्यस्य शासनं करोति स्म । तस्य पुत्रद्वयम् आसीत् । यदा सः आसन्नमरणः अभवत् तदा पुत्रद्वयम् आहूय ज्येष्ठपुत्रं राजत्वेन, कनिष्ठं च सेनापतित्वेन नियोजितवान् । ब्रह्मदत्तस्य मृत्योः अनन्तरं ज्येष्ठः कुमारः वैराग्येन मन्त्रिप्रभृतीन् अकथयत् - ''अहं राज्यं न इच्छामि, भवन्तः मम अनुजाय राज्यशासनदायित्वं दातुम् अर्हन्ति'' इति ।

तदनन्तरं सः काशीराज्यं परित्यज्य सुदूरे विद्यमाने सामन्तराज्ये कस्यचित् धनिकस्य गृहे कार्यं कुर्वाणः दिवसान् अयापयत् ।

कदाचित् काशीराज्यस्य केचन अधिकारिणः भूमापनं कृत्वा करं सङ्ग्रहीतुं तत् सामन्तराज्यं प्रति आगतवन्तः ।

धनिकस्य गृहे कर्मकरत्वेन स्थितं राजकुमारम् अभिज्ञाय ते स्वस्य श्रद्धां भक्तिं च प्राकटयन् । सः एव ज्येष्ठः राजकुमारः इति ज्ञात्वा धनिकः कदाचित् तम् उक्तवान् - ''भगवन् ! भवतः भ्रातरं प्रति पत्रं प्रेषयित्वा यथा मम भूमिकरः न्यूनः भवेत् तथा करोतु कृपया'' इति । राजकुमारः राज्ञे पत्रं प्रेषितवान् । राज्ञा भ्रातुः अपेक्षा अनुमता ।

धनिकस्य करः न्यूनीकृतः इति वार्तां ज्ञातवन्तः बहवः राजकुमारस्य निकटम् आगत्य स्वकरं न्यूनीकारयतु भवान् इति निवेदनम् आरब्धवन्तः । एतेषां भूमिकरः न्यूनीकार्यताम् इति पत्रं लिखित्वा अनुजाय प्रेषितं तेन । भ्रातुः वचनानुसारं राज्ञा व्यवस्था कृता ।

तस्मात् दिनात् जनाः स्वभूमिकरस्य धनम् आनीय ज्येष्ठाय राजकुमाराय समर्पणम् आरब्धवन्तः । तेन कारणेन तस्य मानसे विरागः इति शब्दस्य 'वि'कारः विलयं गतः । रागमात्रम् अवशिष्टम् । क्रमशः तस्य मनसि राज्यप्राप्तेः इच्छा प्रबला जाता ।

ततः सः मन्दं मन्दम् एकैकशः सामन्तराज्यं

वशीकुर्वन् भ्रातरम् अपि सूचयति स्म ।

गच्छता कालेन तस्य मनसि इच्छा उत्पन्ना यत् मया काशीराज्यं हस्तगतं करणीयम् इति । अतः सः भ्रात्रे सन्देशं प्रेषितवान् – ''समग्रं काशीराज्यं मह्यं समर्पयतु, अथवा मां विरुद्ध्य युद्धं करोतु'' इति ।

तस्य उत्तररूपेण कनिष्ठः राजकुमारः पत्रं प्रेषितवान् – ''एतत् राज्यं तु भवदीयम् एव । यदा इष्यते तदा भवान् स्वीकरोतु'' इति ।

तदनन्तरं ज्येष्ठः राजकुमारः सिंहासनम् आरूढवान्, कनिष्ठः च तस्य सेनापतिः जातः । ज्येष्ठः राजकुमारः काशीराज्यमात्रेण सन्तुष्टः न अभवत् । तद्राज्यं परितः विद्यमानम् एकैकं राज्यं जित्वा, तत्र स्वाधिकारं प्रतिष्ठापयन् सः स्वराज्यं विस्तारितवान् । तथापि सः सन्तुष्टः न अभवत् ।

कदाचित् देवलोकस्य राजा इन्द्रः भूलोकव्यवहाराणां विषये चर्चां कुर्वन् आसीत् । तस्मिन् प्रसङ्गे काशीराज्यस्य विषये अपि चर्चा प्रवृत्ता । इन्द्रस्य मनसि विचारः आगतः – 'काशीराज्यस्य विषये उपेक्षा क्रियते चेत् बहूनां राज्यानां हानिः भवेत्' इति । अतः तेन निश्चयः कृतः यत् ज्येष्ठं राजकुमारं समीचीनं पाठं पाठयिष्यामि इति ।

ततः कदाचित् सः युवकरूपेण काशीराजस्य दर्शनाय आगतवान् । सः अकथयत् – ''महाराज ! भवन्तम् एकं रहस्यं वक्तुम् अहम् आगतवान् अस्मि'' इति ।

राजा तं युवकं स्वस्य अन्तःपुरं नीतवान् । तत्र युवनेन उक्तम् – ''राजन् ! मया त्रीणि महानगराणि ज्ञायन्ते । तानि सुसम्पन्नानि,



चतुरङ्गसेनायुक्तानि च । अहं स्वशक्त्याधारेण तानि त्रीणि अपि नगराणि जित्वा भवते दातुम् इच्छामि'' इति ।

युवकस्य मुखात् निर्गतम् एतत् वाक्यं श्रुतवतः राज्ञः मनः अनुक्षणमेव लोभावृतम् अभवत् । किन्तु तावति काले युवकरूपधारी इन्द्रः दृष्टिपथात् अपगतः जातः आसीत् ।

राज्ञा अन्वेषणं कृतं चेदपि सः युवकः दृष्टिगोचरः न अभवत् । अतः सः प्रमुखान् अधिकारिणः आदिशत् – ''इदमिदानीं मम समीपं यः युवकः आगतवान् आसीत्, तेन उक्तं – त्रीणि महानगराणि जित्वा दास्यामि इति । अतः त्वरितम् एव तम् अन्विष्य गृहीत्वा मम पुरतः उपस्थापयन्तु भवन्तः'' इति ।

राज्ञः परिचारकैः सैनिकैः च युवकस्य अन्वेषणं बहुधा कृतम् । तथापि सः तु न

प्राप्तः एव । ततः राजा उन्मादेन लिप्तः इव अभवत् ।

एतादृश्या मानसिकचिन्तया दह्यमानं तं राजानं कुशलाः भिषजः चिकित्सितवन्तः । किन्तु तेषां चिकित्सा विफला जाता ।

तेषु एव दिवसेषु सर्वशास्त्रपारङ्गतः बोधिसत्त्वः तक्षशिलातः काशीम् आगतवान् । राज्ञः अस्वास्थ्यवार्तां विज्ञाय सः राजभवने उपस्थितः सन् अवदत् – 'अहं राज्ञः अस्वास्थ्यं दूरीकर्तुं शक्नोमि' इति ।

राज्ञः अनुज्ञां प्राप्य बोधिसत्त्वः राजनिकटम् आगत्य अपृच्छत् – ''राजन् ! भवतः अस्वास्थ्यस्य कारणं किम् ?'' इति ।

आवेशयुक्तः राजा तं युवकस्य वचनदानवृत्तान्तं समग्रं श्रावयित्वा अकथयत् – ''ततः आरभ्य एषा मानसिकचिन्ता बाधमाना अस्ति माम् । एतां चिन्तां दूरीकर्तुं किं भवान् शक्नुयात् ?'' इति ।

बोधिसत्त्वः राजानम् अपृच्छत् – ''प्रभो ! ईदृश्या मानसिकचिन्तया किं भवान् तानि त्रीणि नगराणि जेतुं शक्नुयात् ?'' इति

''नैव, न कदापि'' इति अवदत् राजा ।

''अतः एव प्राज्ञैः उच्यते – चिन्ताकरणेन कापि उपलब्धिः न भवति इति । अस्मिन् जगति दृश्यमानानि वस्तूनि गच्छता कालेन अदृश्यानि जायन्ते इति भवान् जानाति एव खलु ?'' इति पृष्टं बोधिसत्त्वेन ।

''तत् तु सत्यम् एव'' इति अवदत् राजा ।

''एतदपि सत्यम् एव खलु यत् सर्वे अपि प्राणिनः कदाचित् निष्प्राणाः भूत्वा अस्मात् जगतः निर्गमनं कुर्युः इति ? अतः राजन् ! नगरत्रयस्य जयेन किं, त्रिंशतः नगराणां जयेन अपि सुखं तु न प्राप्स्यते । जगत्याम् अस्यां किमपि वस्तु शाश्वतं जेतुं न शक्यम् । आशा काचित् पिशाची इव । अतः तस्याः निग्रहणं करणीयं चेत् अपेक्षाणां नियन्त्रणं कर्तव्यं भवति । यथा चर्मकारः पादुकायाः आकृत्या एव चर्म कर्तयति तथा नियता सीमा भवेत् आशानाम् । ततोऽपि अधिकतया आशां विस्तारयामः चेत् महती हानिः'' इति ।

बोधिसत्त्वस्य उपदेशस्य श्रवणेन राज्ञः मनः शान्तिं प्राप्नोत् । तदनन्तरं राज्ञः विनययुक्तेन अनुरोधेन बद्धः बोधिसत्त्वः धर्मोपदेशेन आजीवनं राज्ञः मार्गदर्शनम् अकरोत् ।





# रामायणम्

लक्ष्मणः सीतारामयोः सम्भाषणं श्रुत्वा उक्तवान् – ''भ्रातः ! अहम् अपि भवन्तौ अनुसरामि'' इति ।

रामः लक्ष्मणस्य अपेक्षां तिरस्कृतवान् । – ''वयं त्रयः अपि गच्छामः चेत् अस्माकं मातॄणां रक्षणं कोऽपि न करिष्यति । अतः भवान् अत्रैव भवतु'' इति अवदत् सः ।

किन्तु लक्ष्मणः एतत् न अन्वमन्यत । ''अहम् अहोरात्रं भवत्सेवां कर्तुम् इच्छामि । अतः मया भवद्भ्यां सह आगम्यते एव'' इति उक्तं तेन ।

रामः ससन्तोषं लक्ष्मणस्य अनुसरणम् अङ्गीकृत्य – 'वसिष्ठमहर्षेः दिव्यास्त्राणि आनीयन्ताम्' इति आदिष्टवान् । दिव्यास्त्रेषु अक्षयतूणीरः, महाधनुः, अभेद्यकवचं च आसन् । तत्र स्वर्णकोशयुक्तं खड्गद्वयम् अपि आसीत् । एतानि अस्त्राणि वसिष्ठसान्निध्यात् आनीतवान् लक्ष्मणः ।

रामः यात्रावसरे करणीयं दानं कर्तुम् उद्युक्तः । सः वसिष्ठस्य पुत्रं सुमन्त्रम् आहूय, तत्पत्न्यै सीतायाः आभूषणानि, पर्यङ्कादिकं च दत्तवान् । शत्रुञ्जयनामकं गजम् अपि अददात् । अगस्त्यादीनां कृते, दशरथस्य विश्वासपात्राय रथसारथेः कृते, ब्रह्मचारिभ्यः च, वस्त्र-मणि-गवादिकं वितीर्णम् ।

अयोध्यायाः निकटे अरण्ये त्रिजटः नाम कश्चन वृद्धः ब्राह्मणः निवासं करोति स्म । बहुपुत्रवतः तस्य युवपत्नी आसीत् । अरण्ये कन्दमूलादिकं खादित्वा जीवननिर्वहणं करोति स्म सः ।

रामेण यात्रादानं क्रियमाणम् अस्ति इति तेन अपि ज्ञातम् । छिन्नवेषधारी सः रामस्य



निकटम् आगत्य – ''राजकुमार ! बहून् पुत्रान् पोषयन्तं मां दारिद्र्यं बाधमानम् अस्ति । भिक्षाटनेन एव जीवन् अस्मि । अतः मयि कृपां प्रदर्शयतु भवान्'' इति विनयेन याचनाम् अकरोत् ।

रामः तम् अवदत् – ''भवान् एकं दारुखण्डं यावच्छक्यं दूरे क्षिपतु । सः यत्र पतेत् ततः एतावत्पर्यन्ते स्थले यावत्यः गावः स्थातुं शक्नुयुः तावतीः गाः भवते दास्यामि'' इति ।

वृद्धः एतत् अङ्गीकुर्वन् समग्रां शक्तिम् उपयुज्य दारुखण्डम् अक्षिपत् । सः च दारुखण्डः सरयूनद्याः अपरस्मिन् तीरे न्यपतत् । रामः तं स्नेहेन आलिङ्ग्य अकथयत् – ''आर्य ! अन्यथा मा चिन्तयतु भवान् । मया तु भवतः तपश्शक्तिं ज्ञातुम् एव तथा उक्तम् । यावत्यः गावः दास्यन्ते इति उक्तम् आसीत् तावत्यः तु दीयन्ते एव । ततोऽप्यधिकं किमपि याचताम् । अवश्यं भवदपेक्षां पूरयिष्यामि'' इति ।

अन्यां कामपि अपेक्षां प्रकटयितुम् अनिच्छन् सः त्रिजटः रामम् आशिषा अनुगृहीतवान् । ततः सः रामेण दत्ताः गाः आश्रमं प्रति अनयत् । एवं सर्वान् दानेन तोषयित्वा रामः लक्ष्मणेन सीतया सह च पितुः दशरथस्य प्रासादं प्रति प्रस्थितवान् ।

वीथ्यां पद्भ्यां गच्छतः तान् त्रीन्, गृहच्छदिम् आरुह्य, मार्गम् उभयतः स्थित्वा च पश्यन्तः जनाः क्रुद्धाः सन्तः परस्परं भाषन्ते स्म – ''तत्र पश्यतु मित्र ! रामः लक्ष्मणः सीता च विभवं विहाय कथं नग्नाभ्यां पादाभ्यां चलन्तः सन्ति इति । दशरथस्य शिरसि कोऽपि प्रेतः आविष्टः अस्ति इति भासते । कश्चित् नितरां दुष्टः भवेत् चेदपि किं सः एतादृशान् जनान् वनं प्रति प्रेषयेत् ? भवतु, दशरथः तु रामं वनं प्रेषयन् अस्ति एव । अतः वयं सर्वेऽपि तम् अनुसृत्य वनं गच्छेम चेत् तेन अवगम्येत वनं प्रति सज्जनस्य प्रेषणस्य किं फलम् इति'' इति ।

एतादृशं वार्तालापं शृण्वन्तः एव ते त्रयः अपि दशरथस्य प्रासादं प्राप्नुवन् । 'राजानं द्रष्टुकामाः वयम् उपस्थिताः' इति तैः सुमन्त्रद्वारा सन्देशः प्रेषितः । दशरथेन सुमन्त्रः सूचितः – 'रामं सीतां लक्ष्मणं च अविलम्बेन प्रवेशयतु' इति ।

यदा रामः अञ्जलिबद्धः सन् अन्तः प्रविष्टवान् तदा दशरथः, अन्तःपुरीयाः स्त्रियः च उदतिष्ठन् । दशरथः रामस्य आलिङ्गनं

कर्तुम् अग्रे गच्छन् अधः न्यपतत् । पतितः सः पुनः उत्थाप्य उपवेशितः ।



दशरथः यदा सहजस्थितिम् आप्तवान् तदा रामः तम् उद्दिश्य - ''महाराज ! अद्य अहं दण्डकारण्यं गच्छन् अस्मि । भवदनुज्ञायै आगतवान् अस्मि । मया बहुधा ज्ञापितौ चेदपि एतौ लक्ष्मणः सीता च अत्र स्थितिं सर्वथा अनिच्छन्तौ माम् अनुसर्तुम् उद्युक्तौ स्तः । एतयोः अपि वनगमनम् अनुमन्यतां भवान्'' इति सविनयम् अवदत् ।

दशरथः रामम् अकथयत् - ''पुत्र ! कैकेयी तु मत्तः वरं प्राप्य मां वञ्चितवती नितराम् । भवान् मम आज्ञाम् उल्लङ्घ्य अपि पट्टाभिषेकं प्राप्नोतु'' इति ।

''मात्रे कैकेय्यै वचनं दत्तवन्तं माम् असत्यभाजं न करोतु पितः ! वनगमने मम कापि आपत्तिः नास्ति । चतुर्दश वर्षाणि अरण्ये यापयित्वा प्रत्यागत्य अहं भवता मेलिष्यामि'' इति उक्तं रामेण ।

''भवता अद्य एव गन्तव्यं किम् ? अद्य रात्रौ अत्रैव उषित्वा अस्मद्द्वारा यत् कारणीयं तत् कारयित्वा श्वः प्रातः उत्थाय अरण्यं गन्तुम् अर्हति भवान्'' इति उक्तं दशरथेन ।

''पितः ! भवता अस्मदिच्छाः सर्वाः पूरिताः इत्येव मन्यताम् । आशिषं प्रदाय प्रेषयतु अस्मान् । अरण्ये कापि विपद् सम्मुखीकरणीया न भविष्यति । तत्र पर्वततडागादिकं द्रक्ष्यामः'' इति रामः उक्तवान् ।

तेषां वनगमनेन दशरथः अतीव दुःखितः अभवत् । दुःखी जायमानं दशरथं दृष्टवतः सुमन्त्रस्य नेत्राभ्यां कोपाग्निः निस्सरन् आसीत् । सः कैकेयीम् उद्दिश्य - ''दुष्टे ! भवतीं यः स्वप्राणतुल्यां मन्यते स्म तस्मै महाराजाय एतावत् कष्टं प्रदत्तं भवत्या । इतःपरं किं वा करणीयम् अवशिष्टम् ? भवत्याः दर्शनेन प्रतीयते यत् भवती महाराजस्य समग्रनाशं वंशनाशं च कर्तुम् एव उद्युक्ता इति । रामस्य राज्याभिषेकेण भवत्याः का हानिः अभविष्यत् ? भरतः अभिषिक्तः सन् राज्यं शासिष्यति चेत् वयम् अत्र भवेम किम् ? अत्र केऽपि ब्राह्मणाः स्थास्यन्ति किम् ? किमर्थम् एतादृशम् अकृत्यम् अनुष्ठितं भवत्या ? अन्ततो गत्वा भवती अपि निरूपितवती यत् मातृगुणाः एव आत्मनि सन्ति इति । भवत्याः पिता अश्वपतिः अपूर्वशक्तिं प्राप्य पशुपक्षिणां भाषाम् अवगच्छति स्म । सः यदा पर्यङ्के शयानः आसीत् तदा जृम्भः



नाम पिपीलकः किमपि प्रलपितवान् । तस्य श्रवणेन अश्वपतिः हसितवान् । एतत् दृष्ट्वा भवत्याः माता हासस्य कारणं पृष्टवती । 'किमर्थं हसितम् इति उक्तं चेत् अहं मरिष्यामि' इति सः अवदत् । 'जीव्यतां म्रियतां वा । तेन न कापि हानिः मम । हासस्य कारणं तु वक्तव्यम् एव' इति भवत्याः माता महता अनुरोधेन अवदत् । तदा सः मुनिसमीपं गत्वा परिहारोपायं पृष्टवान् । 'भवतः पत्नी हासस्य कारणं पृच्छन्ती एव कदाचित् म्रियेत चेदपि भवता तु कारणं न वक्तव्यम्' इति परिहारं सूचितवान् मुनिः । ततः राजा पत्नीं मातृगृहं प्रति प्रेषयित्वा सुखेन जीवितवान् । भवत्याः चिन्तनशैली अपि एतादृशी एव अस्ति । पितरं परित्यज्य रामः वनं गच्छति चेत् महती विपदेव आपतिष्यति । अतः दुरनुरोधं कृपया त्यजतु भवती'' इति ।

सुमन्त्रस्य वचनानि कैकेयीं लज्जिताम् अकुर्वन् । तथापि सा तानि अश्रुतवती इव अन्यदिशि मुखं कृत्वा अतिष्ठत् ।

तदा दशरथः सुमन्त्रम् उक्तवान् – ''रामेण सह चतुरङ्गसेनां, महाधनराशिं, सेवकान् च प्रेषयतु । वस्तूनि अपि प्रेषयतु । राज्यं नास्ति इति तेषाम् अनुभूतिः कदापि न भवेत् तत्र'' इति ।

सुमन्त्रस्य वचनैः कैकेय्यां कोऽपि प्रभावः न उत्पन्नः । सा तूष्णीं स्थितवती आसीत् । किञ्चिदिव भीता सा – ''महाराज ! यदि एते सर्वे अयोध्यायाः बहिर्गच्छेयुः तर्हि भरतः राज्याभिषेकं न अङ्गीकुर्यात्'' इति अवदत् दशरथम् ।

''हे दुर्मते ! माम् एतावता प्रमाणेन क्लेशितवती भवती वचनकशया अपि ताडयन्ती अस्ति । एवं पीडादानम् अपि वररूपेण एव प्रष्टव्यम् आसीत् भवत्या'' इति क्रुद्धः सः प्रत्यवदत् ।

कैकेयी अपि द्विगुणितेन क्रोधेन अपृच्छत् – ''किम् एतत् सर्वं मया पार्थक्येन एव याचनीयम् ? वनगमनं नाम सर्वं भोगं त्यक्त्वा गमनम् इत्येव तात्पर्यम् । भवतां पूर्वजेन सगरेण स्वपुत्रः असमञ्जः यदा अरण्यं प्रति प्रेषितः, तदा तेन सह सेना अपि प्रेषिता आसीत् किम् ?'' इति ।

एतत् श्रुत्वा सिद्धार्थः नाम मन्त्री अवदत् – ''किमर्थं भवती असमञ्जस्य विषयम् अत्र उल्लिखति ? सः तु परमदुष्टः आसीत् । वीथीषु क्रीडतः बालान् नयति स्म, सरयूनद्यां क्षिप्त्वा

म्रियमाणानां बालानां दर्शनेन सन्तुष्यति स्म । अतः लोकाः राजानम् अपृच्छन् – 'अस्मान् वा नगरात् बहिः प्रेषयतु, अथवा तं दुष्टम् असमञ्जं वा बहिष्करोतु'' इति । राजा द्रोहिणं तं सपत्नीकं कर्मकरैः सह राज्यात् बहिः प्रेषितवान् सर्वविधाः अपि व्यवस्थाः कारयित्वा । यतः तस्य उद्देशः आसीत् – सः पुनः राज्यं न प्रविशेत् इति । तादृशेन द्रोहिणा जनप्रियं श्रीरामं कथं तोलयन्ती अस्ति भवती ?'' इति ।

एतेन तस्यां कोऽपि परिणामः न जातः । तदा दशरथः – ''हितवचांसि भवत्याः मस्तकं न प्रविशन्ति । अहम् अपि रामेण सह अरण्यं गच्छामि । भवती पुत्रेण भरतेन सह सुखेन राज्यं शास्तु'' इति अकथयत् ।



रामः एतेषां परस्परसम्भाषणं श्रुत्वा पितरम् अवदत् – ''महाराज ! अहम् अरण्ये कन्दमूलादिकं खादन् जीविष्यामि । एवं सति तत्र का आवश्यकता सेनायाः ? कुष्माण्डानां वितरणानन्तरं सर्षपविषये कृपणता सर्वथा न करणीया खलु ? अतः एवंविधं व्यवहारं त्यजतु भवान् । धर्तुं वल्कलानि, कन्दमूलम् उत्पाटयितुं खनित्रं, कण्डोलं च दापयतु । तावता अलम्'' इति ।

कैकेय्याः मानः स्वाभिमानः च तावता एव निर्गतः आसीत् । सा अवदत् – ''गृह्यन्तां वल्कलानि एतानि'' इति ।

रामः लक्ष्मणः च स्ववस्त्राणि अपनीय वल्कलानि अधरतां पितुः समक्षे एव । सीता लज्जमाना सती रामम् अवलोकयन्ती कण्ठे वस्त्रखण्डमेकं वेष्टयित्वा अपरं हस्तेन गृह्णती शिरः अवनमय्य स्थितवती । रामः ताम् उपसर्प्य वल्कलं धारितवान् धृतायाः शाटिकायाः उपरि एव ।

एतत् दृष्ट्वा तत्रत्याः स्त्रियः अवदन् – ''राम ! पितुः वचनानुसारं भवान् अरण्यं गच्छन् अस्ति । किन्तु सीता किमर्थं नीयते भवता ? तया वने वासः न शक्यः । सा अस्माभिः सह एव तिष्ठतु'' इति ।

अत्रान्तरे सीतायै वल्कलानि दत्तवतीं कैकेयीं वसिष्ठः उक्तवान् – ''अयि गुणहीने ! भवत्याः दुस्स्वभावः असीमः प्रतीयते । सीतायाः अरण्यगमनस्य का आवश्यकता ? रामस्य पट्टाभिषेकाय या व्यवस्था कृता आसीत् तया एव व्यवस्थया एतस्याः सीतायाः अपि राज्याभिषेकः शक्यः आसीत् इति किं भवती जानाति ? सीतायाः वल्कलधारणस्य अपि

नास्ति कापि आवश्यकता । अन्यच्च सा आत्मना सह वाहनं, दासीः, सामग्रीः च नेतुम् अर्हति एव । एतत् सर्वं दृष्ट्वा भरतः सन्तुष्टः भविष्यति इति भवती चिन्तयन्ती स्यात् । किन्तु भवत्याः दुष्टः व्यवहारः तस्मै अपि न रोचते । यदि सः पितुः पुत्रः स्यात् तर्हि अरण्यं गच्छन्तं रामं, व्यथमानं पितरं च द्रष्टुं न शक्नुयात् एव'' इति ।

दशरथेन सर्वतः अपि तिरस्कारध्वनिः एव श्रुतः । सीताम् उद्दिश्य सः अवदत् - ''वत्से ! कोमलाङ्गी अल्पवयस्का भवती मुनिभार्या इव वल्कलं कथं धर्तुं शक्नुयात् ? भवती तानि सर्वथा न धरेत्'' इति ।

रामः पितरम् उक्तवान् - ''आर्य ! भवान् कौसल्यायाः रक्षणं करोतु'' इति ।

दशराथः सुमन्त्रम् असूचयत् - ''उत्तमैः अश्वैः युक्तेन रथेन एतान् नगरात् बहिः प्रापय्य आगच्छतु'' इति । ततः सः कोशाधिकारिणम् आदिशत् - ''चतुर्दशानां वर्षाणां कृते सीतायै यावत् अपेक्षितं तावत् भूषणशाटिकादिकं प्रेषयतु'' इति ।

विवाहार्थं प्रस्थिता इव सीता आत्मानम् अलङ्कृर्वती आसीत् । कौसल्या सकृत् ताम् आलिङ्ग्य - ''सीते ! भवत्याः पतिः इदानीं निर्धनः । अतः अरण्ये भवती ततः वस्तूनाम् अपेक्षां मा करोतु'' इति बोधितवती ।

प्रदक्षिणपुरस्सरं मातापितरौ नमस्कृत्य रामः मातरम् उक्तवान् - ''अम्ब ! भवती स्वदुःखं त्यक्त्वा शोकाकुलस्य पितुः विषये अवधानवती भवतु । चतुर्दशानां वर्षाणां यापनं न हि क्लेशाय । अतः अलं चिन्तया'' इति ।

लक्ष्मणः अपि पितरौ प्रणम्य मातरं सुमित्राम् अनुज्ञाम् अयाचत । सुमित्रा लक्ष्मणस्य शुभप्रयाणम् आशंसन्ती - ''सीता एव भवतः माता । अरण्यमेव अयोध्या । यथा कापि विपत् भ्रातरं न आवृणुयात् तथा रक्षणं भवतः कर्तव्यम्'' इति उपदिष्टवती ।

ततः त्रयः अपि बहिः आगतवन्तः । वध्वाः इव आसीत् सीतायाः वस्त्रधारणम् । वनवासं मातृगृहवासं मन्यमाना सा सर्वप्रथमं ससन्तोषं रथे उपविष्टवती । तदनन्तरं रामलक्ष्मणौ रथम् आरूढवन्तौ । सुमन्त्रः दशरथेन दत्तं वस्त्रम् आभूषणं खनित्रं कण्डोलं च रथे स्थापितवान् । तदनन्तरं रथः प्रस्थितः ।





# विरूपस्य विवाहः

कस्मिंश्चित् ग्रामे वज्रभूषणः नाम कश्चित् भूस्वामी आसीत् । तस्य पुत्रः विरूपः । सः विवाहयोग्यः । सः प्रतिदिनं रात्रिसमये गृहस्य पृष्ठभागे विद्यमानस्य अश्वत्थवृक्षस्य अधः शेते स्म । प्रातः उत्थानानुक्षणं वृक्षे पक्षिणां दर्शनात् सः हर्षचित्तः भवति स्म ।

कदाचित् प्रातः सः उत्थाय वृक्षदिशि दृष्ट्वा चीत्कुर्वन् निस्संज्ञः अभवत् । पुत्रस्य चीत्कारश्रवणेन वज्रभूषणः तत्र उपस्थितः । अचेतनतां प्राप्य पतितं पुत्रं कर्मकराणां साहाय्येन सः गृहस्य अन्तः अनयत् ।

ततः स्वल्पसमयानन्तरं विरूपः सचेतनतां तु प्राप्तवान्, किन्तु भ्रान्तमतिः इव यत्किमपि प्रलपनम् आरब्धवान् । एतस्मात् वज्रभूषणेन महती व्याकुलता अनुभूता । तस्मिन् एव दिने विरूपस्य विवाहनिश्चयाय कन्यापक्षीयाणाम् आगमनम् अपि निश्चितम् आसीत् ।

वज्रभूषणेन वधूपक्षीयाणां कृते वार्ता प्रेषिता – ''सप्ताहानन्तरम् आगम्यताम्'' इति । ततः सः प्रतिवेशिनं माधवाचार्यनामकं वैद्यम् आकारयत् ।

माधवाचार्यः विरूपं परीक्ष्य उक्तवान् – ''एषः व्याधिग्रस्तः तु नास्ति । प्रायः काचित् पिशाची एतम् आविष्टवती स्यात् । अस्माकं मठं प्रति कश्चन विरागी आगतवान् अस्ति । एतं तस्य समीपं नीत्वा दर्शयाम'' इति ।

ततः तौ उभौ विरूपं मठं नीतवन्तौ । तस्मिन् समये कश्चन विरागिणः समीपे इतस्ततः भ्रमन् आसीत् । सः भूताविष्टः एव । विरागी भूताविष्टं तं कशया अताडयत् त्रिवारम् । तदनन्तरं भूतापगमनम् अभवत् । एतत् दृष्टवता वज्रभूषणेन विरागिणि विश्वासः प्राप्तः ।

विरागी प्रवृत्तं सर्वं श्रुत्वा अवदत् – ''कश्चित् दुष्टः मन्त्रप्रयोगेण एवं कृतवान् अस्ति । भवतः ग्रामे कति मान्त्रिकाः सन्ति इति वदतु'' इति ।

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



''अस्मद्ग्रामे शरभः साम्बः चेति उभौ मान्त्रिकौ स्तः'' इति उक्तं वज्रभूषणेन ।

''तयोः केनचित् एकतरेण कार्यमिदं विहितं स्यात् । भवान् तयोः निकटं गत्वा पृच्छतु, चिकित्सां करोतु इति वदतु च । यः चिकित्सां कर्तुम् अङ्गीकरोति तस्य नाम मां सूचयतु'' इति अवदत् विरागी ।

वज्रभूषणः माधवाचार्यः च गृहं प्रतिगत्य भूतवैद्यौ तौ मान्त्रिकौ गृहं प्रति आकारितवन्तौ । शरभः विरूपं परीक्ष्य तस्य चिकित्सां निराकृत्य ततः निर्गतवान् । साम्बः आगत्य परीक्षां कृत्वा - 'एतम् अहं पीडामुक्तं करिष्यामि' इति प्रतिज्ञाय उक्तवान् - ''अद्य रात्रौ अञ्जनेन ज्ञास्यामि - एतत् कुतन्त्रं कस्य इति'' इति ।

तयोः मान्त्रिकयोः मध्ये वैरत्वम् आसीत् । तदनन्तरं वज्रभूषणः साम्बं प्रेषयित्वा ततः साक्षात् विरागिणः निकटं गत्वा उक्तवान् - ''साम्बः न केवलं चिकित्साम् कर्तुं सिद्धः, अपि तु तस्य कथनम् अस्ति-यत् एतत् कुतन्त्रं शरभस्य एव इति'' इति ।

तदा विरागिणा उक्तम् - ''भवान् शरभे शङ्कते किम् ? मया दिव्यदृष्ट्या ज्ञातम् अस्ति यत् एतत् सर्वं साम्बस्य एव कुचिन्तनम् इति । अद्य रात्रौ सः अञ्जनयोजनव्याजेन भवत्पुत्रस्य प्राणहरणाय प्रयासं करिष्यति । भवान् मम वचसि विश्वस्य पुत्रस्य रक्षणं करोतु'' इति ।

ततः सः विरागी एतदर्थं किं करणीयं भविष्यति इति वज्रभूषणं सूचितवान् अपि । तस्यां रात्रौ वज्रभूषणः माधवाचार्यः च द्वाभ्यां सह साम्बस्य गृहं प्रति प्रस्थाय गृहसमीपे सस्यगुल्मेषु निलीय स्थितवन्तः ।

अर्धरात्रे सः साम्बः गृहाभ्यन्तरे रङ्गवल्लीं सज्जीकृत्य तन्मध्ये मृतं सर्पं स्थापितवान् । तदुपरि कपोलं संस्थाप्य तस्य उपरि जम्बीरं स्थापयित्वा धूपं प्रसार्य, स्वस्य अङ्गुलीं कर्तयित्वा रक्तेन कपोलस्य उपरि तिलकम् अङ्कितवान् ।

एतावतीं सज्जतां कृत्वा यावत् सः रङ्गवल्ल्याः पुरतः उपवेष्टुम् उद्युक्तः अभवत्, तावता तस्य गृहं प्रविष्टवन्तः ते चत्वारः । तं गृहीत्वा स्तम्भे बद्ध्वा ते बहुधा ताडितवन्तः । श्रान्तं तम् आकर्षन्तः ते विरागिणः निकटम् अनयन् ।

'स्वदोषः अङ्गीक्रियताम्' इति सर्वे तं सनिर्बन्धम् अवदन् । तथापि सः ताड्यमानः रुदन् अवदत् - ''श्रीमन् ! भगवति प्रमाणं विधाय वदामि । मया मन्त्रैः कोऽपि न वशीकृतः । एतत् कुकृत्यं केन कृतम् इत्यपि

अहं न जानामि । एतत् अभिज्ञातुम् एव अञ्जनयोजनं कुर्वाणः आसम् । तावता एते मम गृहम् आगत्य मां गृहीत्वा अत्र आनीतवन्तः'' इति ।

तदा एव विरूपेण सह शरभः तत्र आगतवान्, सगर्जनम् उक्तवान् च - ''भवन्तः साम्बस्य पीडनात् विरमन्तु । वस्तुतः मन्त्रैः जनान् वशीकर्तुं प्रतिवेशिग्रामतः आगतवन्तं विरागिरूपेण विराजमानम् एतं मान्त्रिकं ताडयन्तु । अनेन एव एषा दुष्टता अनुष्ठिता । भवन्तः तु व्यर्थमेव मां साम्बं च अपमानितौ कर्तुम् उद्युक्ताः । एतस्मिन् दुष्टे मम शङ्का आसीत् एव'' इति ।

एतत् सर्वं श्रुत्वा विरागी ततः पलायनाय यत्नम् अकरोत् । किन्तु शरभः विरूपः च तं गृहीत्वा सम्यक् अताडयताम् ।

सः चीत्कुर्वाणः - ''भोः ! भ्रातरः ! क्षुद्रलालसाग्रस्तेन मया एव अकृत्यम् एतत् विहितम् । मद्द्वारा एतस्य सर्वस्य कारयिता सः दुष्टः अत्रैव विद्यते'' इति वदन् माधवाचार्यं सङ्केतयन् वस्तुस्थितिम् अवदत् । एतत् श्रुतवतः माधवाचार्यस्य मुखं विवर्णम् अभवत् ।

वज्रभूषणः तं क्रोधेन पश्यन् - ''एवं तर्हि एतत् किं कुतन्त्रं भवतः एव अस्ति ? भवता एवंविधं कुतन्त्रं किमर्थं कारितम् ?'' इति अपृच्छत् ।

तदा विरूपः उक्तवान् - ''अस्य कृपणता सर्वैः अपि ज्ञाता एव अस्ति । अधिकव्ययं कर्तुम् अनिच्छता अनेन कृपणेन एकमात्रपुत्रीविवाहं निर्वर्तयितुं मां जामातरं च कर्तुं विरागिद्वारा एषः प्रयोगः कारितः । अहम् उन्मत्तः इति प्रचारः भवति चेत् कन्यां दातुं कोऽपि अग्रे न आगमिष्यति, ततः मह्यं स्वपुत्रीं दत्त्वा विवाहं कारयित्वा मां यथापूर्वं कर्तुं योजनां कृतवान् आसीत् एषः । विवाहाय धनव्ययं सर्वथा कर्तुम् अनिच्छन् एषः एतत् सर्वं कृतवान् । वृक्षे कश्चित् भयङ्करम् आकारं दृष्टवतः मम मतिभ्रमः जातः आसीत् । शरभवर्यस्य कृपया अहं तस्मात् मुक्तः अभवम्'' इति ।

माधवाचार्यः आत्मना कृतस्य अपराधस्य कारणतः नितरां लज्जितः अभवत् । तेन विवेकः प्राप्तः आसीत् । ततः महता वैभवेन एव सः विरूपं स्वस्य जामातरम् अकरोत् ।



# यदि सा अभविष्यत् तर्हि ...

**श्री**रङ्गः तरङ्गः च उत्तमौ सुहृदौ । किन्तु तयोः व्यर्थभ्रमणरूपः कश्चन दुरभ्यासः आसीत् । विना विशेषोद्देशं तौ इतस्ततः भ्रमतः स्म । कदाचित् तौ व्रणितं जनं कञ्चित् वैद्यस्य निकटम् आनीतवन्तौ । वैद्यः तस्य व्रणान् स्वच्छीकृत्य पट्टिकया बद्ध्वा नाडीपरीक्षाम् अकरोत् । ततः स्वल्पसमयानन्तरं वैद्येन पृष्टम् – "अस्य व्रणाः कथं सञ्जाताः ?" इति ।

"द्वौ मेषौ परस्परं युद्ध्यमानौ आस्ताम् । मया उच्चस्वरेण उक्तं यत् कृष्णमेषः एव जयं प्राप्स्यति इति । किन्तु अस्य वादः आसीत् – श्वेतमेषः एव जेष्यति इति । एवं मम श्रीरङ्गस्य च कोलाहलः अधिकः जायमानः कलहरूपं प्राप्नोत् । आवां परस्परं ताडयन्तौ योद्धुम् उद्युक्तौ । तस्मिन् प्रसङ्गे एषः सज्जनः तेन मार्गेण गच्छन् आसीत् । कलहं कुर्वन्तौ आवां पृथक्कृत्य एषः आवयोः मध्ये स्थितवान् । मया श्रीरङ्गस्य ताडनोद्देशेन शिला क्षिप्ता । किन्तु सा शिला मध्ये आगतस्य अस्य उपरि पतिता, अयं च व्रणितः अभवत्" इति उक्तं तरङ्गेण ।

श्रीरङ्गः कौतुकपूर्णेन स्वरेण अवदत् – "एतस्य मस्तिष्के व्रणः न जातः स्यात् खलु ? एतत् तु महत् भाग्यम् एव" इति ।

"तथा व्याकुलता मास्तु भवतोः । अस्य वराकस्य तत् मस्तिष्कं यदि स्यात् तर्हि एषः भवतोः मध्ये किमर्थम् आगमिष्यत् ? । व्रणः तु सामान्यः एव । स्रवत् रक्तं दृष्टवतः अस्य विसंज्ञता अभवत् । स्वल्पे एव समये सामान्यस्थितिं प्राप्स्यति एषः" इति वैद्यः हसन् उक्तवान् ।



6

*चित्रम् - गान्धि अय्यः*

# अपराजेयः गरुडः

रामसिंहस्य संरक्षणाय गतः आदित्यः स्वयम् आपदि अपतत् । किन्तु रामसिंहः तम् अरक्षत् । राजा रविवर्मा स्वस्य अमूल्यदायित्वानि रामसिंहाय दत्त्वा निश्चिन्तः भवति । राज्यस्य सीमायां भ्रमन्तः चत्वारः वनवासिनः गृहीताः अभवन् । राज्याभिषेकसमाप्तिपर्यन्तम् एते कारागारे भवन्तु इति अवदत् आदित्यः ।

*रामसिंहः अङ्गरक्षकाणां नायकेन सह आदित्यस्य आवासम् आगच्छति ।*

भगवन् ! नायकः किञ्चित् वक्तुकामः अस्ति ।

सीमाप्रदेशतः वार्ता प्राप्ता अस्ति यत् गृहेषु युवानः अदृश्याः भवन्तः सन्ति इति ।

अत्र चिन्तनीयः विषयः कः ?

ते एकैकशः अदृश्याः जायमानाः सन्ति ।

तस्य गवेषणाय स्वयं गच्छामि ।

किन्तु राजा भवतः उपस्थितिम् इच्छेत् ।

अस्माकम् अवधानम् अन्यत्र न भवेत् । यतः राज्याभिषेकम् आगच्छतां स्वागतसत्कारादिकं कर्तव्यम् अस्ति ।

सर्वसीमाः सुरक्षिताः सन्ति प्रभो !

सैनिकाः सूचनीयाः यत् बहिः गच्छन्तः जनाः अपि परिलक्षणीयाः इति ।

भवतु रामसिंह ! अधुना ते अन्तः प्रविशतः जनान् एव अवरुन्धानाः सन्ति ।

मानवबलिसम्बद्धा काचित् वार्ता श्रुता आसीत् मया ।

किन्तु गुहामान्दिरस्य निशानन्तरं तत् समाप्तं जातम् स्यात् इति चिन्तितम् आसीत् मया । तथापि अस्माभिः जागरूकैः भवितव्यम् । रामसिंह, श्वः प्रातः अनुष्ठानाय सज्जेन भाव्यम् ।



पर्वतस्य गुहायां पित्रा सह उपविष्टम् आप्तपुरुषम् पश्यति रवीन्द्रदेवः ।

चन्द्रपुरीं प्रति प्रेषिताः ते वनवासिनः न प्रत्यागताः । अहं चिन्ताक्रान्तः अस्मि ।

तात, अस्माभिः तेषु विश्वासः करणीयः ।

तेषां विषये चिन्ता करणीया नास्ति अस्माभिः । यज्ञस्य अनुवर्तनं भवतु । चमत्कार-सम्भवं प्रतीक्षेमहि ।

नागबन्धोः भविष्यवाणी आसीत् एषा ।

एतत् भविष्यति इत्यत्र मम कोऽपि संशयः नास्ति ।

महानुभाव ! धैर्यविहीनः मा भवतु कृपया ।

विश्वासः भवतु । अत्रान्तरे मित्राय वज्रपुर्याः बिक्रमसिंहाय सन्देशः प्रेषितः मया । आवां सहपाठिनौ आस्व । सः मया मेलितुम् अवश्यम् आगच्छेत् ।

तस्य मेलनेन भवतः आत्मविश्वासः द्विगुणः भवेत् तात !

अहं चन्द्रपुर्याः कार्येषु मग्नः आसम् । अतः तस्य सम्पर्कसंरक्षणाय मया समयः न लब्धः ।

सः आगमिष्यति, तस्य साहाय्यं च प्राप्स्यते इति च मम विश्वासः अस्ति ।

वनवासियुवकाः रवीन्द्रदेवाय भोजनम् आनयन्ति । आप्तपुरुषः रवीन्द्रदेवः च निर्गमनाय पितुः अनुज्ञां प्राप्नुतः ।





मन्दिरे यज्ञारम्भसम्बद्धानि अनुष्ठानानि आरब्धानि ।



वनवासिनः गरुडशावकान् यज्ञकुण्डे प्रक्षिपन्ति । अग्निकणाः उपरि डयन्ते ।

नागबन्धोः शिष्याः उन्मादेन मन्त्रोच्चारम् आरभन्ते ।


गुहामन्दिरस्य समीपम् आगच्छन्तौ आप्त-पुरुषरवीन्द्रौ पश्यन्ति वनवासिनः । नाग-बन्धोः शिष्याः तयोः स्वागतं व्याहरन्ति ।


चन्द्रपुरीतः कापि वार्ता अस्ति किम् ?
नास्ति । किन्तु सीमातः युवकचतुष्टयस्य आनयने कथमपि अस्मदीयाः सफलाः अभवन् । तेषां बलिदानाय सन्नाहः क्रियमाणः अस्ति ।


प्रभो ! भवतः पितृसकाशात् सन्देशः आगतः अस्ति । सः भवता मेलितुम् इच्छति ।
वज्रपुरीतः कापि वार्ता अवश्यम् आगता स्यात् ।


रवीन्द्र ! भवान् गच्छतु ।
आम् । एतत् महत्त्वपूर्णं स्यात् ।


गुहामन्दिरतः गच्छन्तं तम् आप्त-पुरुषः पश्यति ।


अयि ! भवान् आगतः । वज्रपुर्याः प्रधान-मन्त्रिणा मिलतु भवान् । मया उक्तम् आसीत् खलु विक्रमसिंहः मां स्मरति इति ।
अनुवर्तते




# उत्सवाः पर्वाणि च

तर्नेतर् नाम उत्सवः गुजरातराज्यस्य प्रधानपर्वसु अन्यतमः । दिनत्रयात्मकः अयम् उत्सवः प्रतिवर्षम् अगस्ट्-सप्टम्बर-मासयोः भवति । राजकोटसमीपे स्थितं त्रिणेत्रेश्वरमन्दिरम् (भगवतः शिवस्य) एतदुत्सवार्थं बहुप्रसिद्धम् ।

जनानां विश्वासः अस्ति - 'ब्रह्मा यदा पुष्पार्चनेन शिवस्य पूजां कुर्वन् आसीत् तदा सहस्रपुष्पेषु एकं पुष्पं न्यूनं जातम् । तदनन्तरं सः स्वनेत्रम् उत्पाट्य शिवाय आर्पयत् । ब्रह्मणा समर्पितं कमलनेत्रं भगवता शिवेन स्वीकृतम् । ततः आरभ्य सः त्रिणेत्रः इति प्रसिद्धः अभवत् । शिवपूजायै ब्रह्मणा चितं स्थानं तर्नेतरम् ।

एतस्मिन् मन्दिरे आचर्यमाणस्य एतस्य उत्सवस्य उपाङ्गतया पाण्डवविषयिकी कथा श्रूयते यत् अर्जुनः अत्रैव बाणप्रयोगे उत्तीर्य द्रौपदीं प्राप्तवान् आसीत् इति ।

मन्दिरस्य अन्तः विद्यमाने तडागे स्नानं कुर्वन्ति तत्र आगताः सर्वे । यतः तेषां विश्वासः अस्ति - 'उत्सवदिवसेषु पूर्णिमायां तत्र स्नानकरणं गङ्गास्नानतुल्यं भवति' इति । शतं स्त्रियः सम्भूय महावृत्ताकारेण नृत्यन्त्यः सरन्ति अस्मिन् उत्सवे । एतत् जानपदनृत्यं 'रसदम्' इति उच्यते ।

एतदवसरे तत् समग्रं स्थानं प्रतिफलद्भिः वर्णच्छत्रैः अलङ्कृतं भवति । अविवाहिताः युवत्यः आकृष्टाः भवन्ति - तेषां छत्राणाम् अधः उपविष्टान् अनूढान् वरान् द्रष्टुकामाः । पूर्वतनी स्वयंवरव्यवस्था कीदृशी आसीदिति एतेन ऊहितुं शक्नुमः वयम् ।

एतावत् तु स्पष्टं यत् तर्नेतरपर्व गुजरातराज्यस्य जानपदनृत्यादिदर्शनाय वेदिकायते इति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्



## भवदर्थकं विज्ञानम्

### ३००० वर्षेभ्यः पूर्वतनं जीवनम्

**ओ**लमेक्संस्कृतिः मेक्सिकन्परिसरे क्रिस्तात् पूर्वं १०० - ३०० वर्षयोः मध्यकाले सुस्थिता आसीत् । सा च संस्कृतिः प्रगता आसीत् । तत्कालीनाः अवशेषाः इतिहासकारान् पुरातत्त्वविदः च विस्माययन्ति बहुधा । ४४ टन्भारमिता काचित् शीर्षाकृतिः तेषु अन्यतमा । कस्यचित् क्रीडाविशेषस्य पटोः शिरसः प्रतिकृतिः स्यात् सा इति तर्क्यते विज्ञैः ।

अद्यतनाः अमेरिकीयाः पादकन्दुकक्रीडकाः यादृशं शिरस्त्राणं धरन्ति तादृशेन शिरस्त्रेण युक्तम् अस्ति तत् शिरः । राष्ट्रियकन्दुकक्रीडायाम् ओल्मेक्-क्रीडापटवः आत्मरक्षणाय एतादृशं शिरस्त्रं धृतवन्तः स्युः इति तर्क्यते । एतैः यः कन्दुकः उपयुज्यते स्म सः नितरां कुतूहलकरः । सः रब्बरमयः भवति स्म । रब्बर्रसः तु वृक्षात् प्राप्यते स्म । अग्रिमे काले एतत् रब्बर् आभरणानां निर्माणे, शस्त्रचिकित्सावसरे बन्धनसाधनत्वेन च उपयुक्तम् ।

प्राचीनाः ओलमेक्जनाः रब्बर्निर्माणं, तस्य विविधान् उपयोगान् च यत् कुर्वन्ति स्म तत् विज्ञानिषु आश्चर्यं जनयति अद्यापि ।

## भवतां परिसरः

### लैन्फिश्जातीयाः मत्स्याः



**मी**नेषु विविधाः जातयः । तासु लैन्फिश्-जातिः अपि अन्यतमा । एतज्जातीयाः मीनाः क्रान्तिवृत्ते, तत्समीपपरिसरे, परिमितजलमये समुद्रे च प्राप्यन्ते । ते वस्तुतः विषमयाः । पक्षाकारके तेषाम् अङ्गविशेषे भवति एतत् विषम् । औषधविशेषस्य निर्माणे एतत् विषम् अपयुज्यते ।

एतस्य मीनस्य शरीरे विविधाकाराः शलाकारूपाः पक्षाः भवन्ति । तेषु शलाकापक्षेषु विषग्रन्थयः भवन्ति । तत्रत्यं विषं व्रणजनने, वमनकारणे च समर्थम् । क्वचित् तत् मरणकारणम् अपि भवितुम् अर्हति । एतस्य विषस्य उपयोगविषये संशोधनं प्रचलति अद्य !

औषधीयं महत्त्वं तु तस्य अस्ति एव । तेनैव सह गृहीये मत्स्यागारे सौन्दर्यवर्धनाय अपि तं बहुधा इच्छन्ति बहवः मत्स्यपोषकाः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?



### नक्षत्राणां मरणम्

रात्रौ यदि गगनाङ्गणं पश्येम तर्हि दृश्यन्ते अनेके प्रकाशमानाः आकाशकायाः, तन्नाम नक्षत्राणि । भूमितः दर्शनात् यावती प्रकाशमानता दृश्यते ततोऽपि अधिका प्रकाशमानता भवति तेषाम् । दूरकारणतः तत्र मन्दता दृश्यते ।

आश्चर्यं नाम मानवानाम् इव मरणं भवति नक्षत्राणाम् अपि । न हि अमराणि तानि । तेषां मरणं कथं भवति इति किं भवन्तः जानन्ति ? तत्र कारणद्वयं - प्रकाशमानता भारः चेति । यस्य प्रकाशमानता अधिका तस्य जीवितावधिः न्यूनः । अधिकः प्रकाशः दाहाधिक्यं सङ्केतयति । अधिकः भारः अपि नक्षत्रस्य जीवितावधिं ह्रस्वीकरोति । अल्पभारं नक्षत्रं पञ्चशतकोट्यधिकवर्षाणि जीवति इति श्रूयते ।

## अभिवर्ध्यतां ज्ञानशक्तिः

*सप्टम्बर्मासः आरब्धः चेद् पर्वमाला एव आरब्धा इव ।*
*मासेऽस्मिन् वयं पर्वणां विषये जानीयाम ।*



१. राजस्थाने अधिकजनप्रियं पर्व किम् ?

२. गुजरातराज्ये जुनागढसमीपे गिमारप्रदेशे प्रचलतः पर्वणः नाम किम् ? कम् अंशं सङ्केतयति तत् ?

३. कार्त्तिकपूर्णिमायां कस्य जन्मदिनम् आचर्यते ?

४. प्रतिद्वादशवर्षं येषु स्थलेषु कुम्भमेलापर्व आचर्यते तानि चत्वारि स्थानानि कानि ?

५. पश्चिमवङ्गे जनवरी-मासे आचर्यमाणं पर्व किम् ?

*(उत्तराणि ६६ तमे पृष्ठे)*



# चित्रशीर्षिकास्पर्धा



KALANIKETAN BALU

अधस्तनं
चित्रद्वयं दृष्ट्वा
परस्पर-
सम्बन्धिना
वाक्यद्वयेन
चित्रशीर्षिकां
किं भवन्तः
प्रेषयितुं
शक्नुयुः ?



MAHANTESH C. MORABAD

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जुलै' मासस्य शीर्षिकाप्रेषकः -

**वै. रामगणेशघनपाठी**

मुख्याध्यापकः, राजवेदकाव्यपाठशाला
यागशालवीथी,
कुम्भकोणम् - ६१२ ००१ (त.ना.)

### पुरस्कृता शीर्षिका





व्याघ्रात् न भीतिः चित्रस्थत्वात् ।
कोऽपि न क्रीणाति कालप्रभावात् ॥



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. तीजपर्व ।
२. भवनाथयात्रा । तपः समाप्य प्रात्यगतस्य अर्जुनस्य स्वागतार्थम् ।
३. गुरुनानकस्य ।
४. हरिद्वारम्, उज्जयिनी, प्रयागः, नासिक् च ।
५. गङ्गासागरनामकः मेलः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# BEST GIFT FOR YOUR DEAR AND NEAR ONES

THREE EXCITING BOOKS FROM
TWO RENOWNED WRITERS FOR CHILDREN

## MANOJ DAS AND RUSKIN BOND

Single copy : Rs 50 each : A set of three for only Rs 125
















Also four books of
**LEGENDS AND PARABLES OF INDIA**
from CHANDAMAMA

Single copy Rs 50 each
A set of four for only Rs 175







### INDIA IS A LAND OF STORIES, RICH IN LEGENDS, PARABLES AND MYTHS

*Chandamama* has enriched many generations of young minds with these stories. The spiritual subtext and moral lessons in these delightful stories continue to fascinate and mould young Indian minds.

*Popular Prakashan* has co-published these stories to educate, entertain and inspire the growing generation.

CHANDAMAMA   Popular prakashan

**FOR FURTHER ENQUIRIES CONTACT :**
**CHANDAMAMA INDIA LTD., 82, DEFENCE OFFICERS COLONY,**
**CHENNAI - 600 097.**

CHANDAMAMA (Sanskrit) SEPTEMBER 2006
Regd. with Registrar of Newspaper for India No. 42664/85. Regd No. TN/CC(S)Dn/158/06-08
Licensed to post WPP - Inland No.TN/CC(S)Dn/82/06-08, Foreign No. 83/06-08